of a mustard seed :- roots of lángali, roots of ghosha (devadáli ), roots of red chitraka, tender bhumi-a'malaki before the growth of flowers and fruits, juice of bhringarája leaves, juice of dhutura' leaves, biles of goat. boar, buffalo, peacock, rohita fish, and ginger juice. This medicine cures all sorts of sánnipa'tika fever. Such cooling actions as referred to in the case of sannipa'ta sudana rasa are to be resorted to.

## सूचीमुखरसः ।

सूतं गन्धकतालकं मणिशिलां ताप्यं लवं तुत्थकं जैपालं विषटङ्कनं मधुफलं कृत्वा समांशं दृढ़म् । कृत्वा कज्जलिकां विषोल्वणफणेः पित्तैश्च संभावयेत् त्रिम् । सीसककूपिके रसवरं सूचीमुखं नामतः ॥ ब्रह्मद्वारि विकीर्णलोहितलवे गुञ्जैकमात्रं ददेत् दत्त्वा संपुटवद्धतन्द्रिकधनुर्व्वातं सशाखाहिमि । कासं श्वासमरोचकं प्रलपनं कम्पं च हिक्कातुरः मूकत्वं वधिरत्व मुन्मदमपस्मारं जयेत्तत्क्षणात् ॥

### *Suchi mukha rasa.*

Equal quantities of mercury, sulphur, orpiment, realgar, copper pyrites, ja tiphala, copper sulphate, croton seeds, aconite, borax, and bikankata are to be rubbed together. The mercury and sulphur, in this case, are to be rubbed first of all to form kajjali or black powder, with which the other ingredients are to be mixed and rubbed together. The compound is then to be subjected to bha'vana' with the bile of a poisonous snake. When dried, the medicine is to be kept in a pot made of lead. One racti of this medicine is to be mixed with blood, shed at the crown of the patient's head

by means of a needle It cures a patient in a dying state suffering from sa'nnipa'tika fever with such symptoms as drooping of the eye-lids, drowsiness, titanus, coldness of the extremities, cough asthma, aversion to food, delirium, shivering, hiccough, loss of power of speech, and power of hearing, insainty, and apoplexy.

## मृतसंजीवनसूचिकाभरण रसः ।

वज्रवैक्रान्तयोर्भस्म प्रत्येकं निष्कसम्मितम् । शृङ्गीविषं द्विनिष्कं च त्रिनिष्कं चुलिकापटु ॥ पञ्च निष्कोऽग्निजारश्च सर्व्वमेकत्र मेलयेत् । तावद् भस्मरसं यावन्मर्द्दयेद्दिवसत्रयम् ॥ शार्ङ्गष्टादिक वर्गस्य चारनीरेण भावयेत् । त्रयोविंशति वाराणि विमर्द्य च विशोष्य च ॥ ततो विमर्द्य दिवसं चिपेद्दन्तकरण्डके । मृतसञ्जीवनाख्योऽयं सूचिकाभरणो रसः ॥

*Mrita-sanjibana-suchikabharna-rasa*

Incinerated diamond and vaikra'nta (garnet), one fourth tola, in weight, each; half a tola of shringi poison, ¾ tola of nava sa'ra (sal-ammoniac), 1¼ tola of agni-ja'ra, and three tola's of incinerated mercury are to be mixed together, and rubbed well, for three days. They are then to be rubbed and subjected to bha'vana', for twenty three times, with a solution of the alkali prepared from the sa'rngasta-varga (detailed below). They are then to be dried well, and rubbed once more, for a day, and kept in in a pot made of ivory.

सन्निपातेन तीव्रेण मुमुर्षो र्भूगतस्य च । तालुनि प्रच्छयित्वाथ रसमेनं विनिक्षिपेत् ॥ सूक्ष्मातिसूक्ष्मया तोयभिन्नयाऽति प्रयत्नतः ।

ततस्तैलेन तं लिप्त्वा निवाते संनिवेशयेत् ॥ ततोऽर्द्धप्रहरादूर्द्धं त्यक्तमूत्रपुरीषकम् । लब्धसंज्ञं प्रतापाढ्यं दोलयन्तं शिरो मुहुः ॥ आयुष्मन्तं विजानीयादन्यथा चान्यथा खलु ॥

This medicine is to be applied to a patient in a moribund condition, suffering from a sa'nnipa'tika fever of a virulent type, and laid on the ground in expectation of death. The flesh at the crown of the patients' head is to be cut a little with the point of a needle, wet with water, and the medicine applied on the spot, by mixing it with the blood that comes out of the spot. The body of the patient is then to be rubbed with oil, and he is to be kept in a place not agitated by wind. If, after the lapse of one and half hour, the patient dis-charges stool and urine, regains consciousness, moves his head again and again, and his whole body is found to be heated, he is taken to be saved from the clutches of death ; otherwise, not.

ततः शीताम्बुसंपूर्णे कटाहे तं निवेशयेत् । तत्र चोत्क्वथितं तोयमपनीयापरं क्षिपेत् ॥ याचमानममुं पश्चात् पाययेत् ससितं पयः ॥ दधि वा सितयोपेतं नारिकेलजलं तथा । रम्भाफलानि दद्याच्च म्रियते सोऽन्यथा खलु ॥ लब्धसंज्ञं प्रभाषन्तं याचमानं फलादिकम् । तस्मादाकृष्य तैलान्तं तैलं पिष्ट्याऽपनीय च ॥ लेपयेद्गन्धकर्पूरै रापादतलमस्तकम् । इत्यादि शिशिरैर्द्रव्यैः समरात्र मुपाचरेत् ॥

In the event of the above mentioned symptoms occurring, the patient is to be seated in a tub, full of cold water, which is to be thrown out as soon as it grows hot, and is to be

replaced by a fresh quantity of cold water. The process is to be repeated for some time. If the patient asks for food, he is to be allowed to drink sugar, dissolved with water or mixed with water, or cocoanut water, and to eat ripe banana fruits. If such diet is not given to him, he may die He is to be taken out of the tub, as soon as he regains consciousness and asks for food. Subsequently, the oil on his skin is to be removed by rubbing it with powdered rice, etc. After the removal of the oil, his whole body is to be smeared with thin sandal paste, mixed with camphor. These processes ( viz cold bath, etc.) are to be performed for seven days, at a stretch.

कर्णाक्षिनासिकावक्त्रे क्षिपेत् शीताम्बु मुहुः । अष्टमेऽहनि संप्राप्ते दद्यात् मण्डूकपर्णीजं रसम् ॥ सितं पाययेद्वेगमवतारयितुं भृशम् । वेगेऽवतारिते पश्चाद् यथेष्टं भोजनं दधि ॥ श्वासोच्छ्रासयुतं चान्यैर्मुक्तं जीवनलक्षणैः । कटाहे जलसंपूर्णे निक्षिपेद्बोधलब्धये ॥ लब्ध बोधं तमाकृष्य पूर्ववत् समुपाचरेत् । जीवित्वा यावदायुष्यं म्रियते तदनन्तरम् ॥

During these seven days cold water is to be sprinkled over and over again, upon the ears eyes, nose, and face of the patient. On the eighth day, he is to drink a little of the juice of mandukaparni, mixed with sugar. This will counteract the intensity of the medicine. The patient is there-after to take a sufficient quantity of boiled rice, mixed with curd.

सन्निपाते महाघोरे मज्जन्तं मृत्युसागरे । उद्धरेत्तस्य धर्मस्य ब्रह्माप्यन्तं न विन्दति ॥ सन्निपातमहामृत्युभयनिर्मुक्तमानवः ।

अपि सर्व्वस्वदानेन प्राणाचार्य्यं प्रपूजयेत् ॥ अन्यथा नरके तावद् यावत् कल्प-विकल्पना ।

This medicine, if applied in the above-mentioned way, may cure even a patient who has last all symptoms of life, living a pretty long life and keeping a good state of health.

शार्ङ्गष्टा च तथा व्याघ्री करीरस्तिलपर्णिका । इन्द्रवारुणिका मुस्ता हरिद्राङ्कोलमूलकम् । अपामार्गः कणा स्वर्ण कटुतुम्बी च तिन्तिड़ी । शार्ङ्गष्टादिकवर्गोऽयं सन्निपातहरः परः ॥

The following are the sa'rgna'staka varga :—sha'rngasta (ka'kajangha'), kantaka'ri, sprouts of bamboo, tilaparni, indraba'runi, musta'. haridra, roots of a'nkola, apa'ma'rga, pippali black dhustura, bitter ala'bu, and tamarind. These are pacifiers of an excess of the three doshas. Water, dissolved with alkalies prepared from these, is to be used for the purpose of bha'vana', as referred to above, in the present case.

### महाज्वरांकुश रसः ।

शुद्धसूतं विषं गन्धं धुस्तूरबीजं त्रिभिः समम् । चतुर्णां द्विगुणं व्योषचूर्णं गुञ्जाद्वयं हितम् ॥ जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम् । महाज्वराङ्कुशो नाम ज्वराष्टकनिसूदनः ॥

### *Maha'-jwara'nkusha rasa*

One part, each, of mercury, sulphur, and aconite, three parts of seeds of dhutura', four parts, each, of shunthi, pippali, and maricha are to be rubbed together, and made into pills, two ractis in weight, each, to be taken with honey, juice of lime fruit, and of ginger. It cures all sorts of fever.

### महाज्वरान्तक रसः ।

पारदं गन्धकं ताम्रं हिङ्गुलं तालमेव च । लौहं वङ्गं माक्षिकञ्च खर्पराञ्च मनःशिला ॥ स्वर्णमभ्रं गैरिकञ्च टंकणं रूप्यमेव च । सर्व्वाण्येतानि तुल्यानि चूर्णयित्वा विभावयेत् ॥ जम्बीरतुलसीचित्रविजयातिन्तिड़ीरसैः । एभिर्दिनत्रयं रौद्रे निर्जले खल्लगह्वरे ॥ चणमात्रां वटीं कृत्वा च्छायाशुष्कान्तु कारयेत् ॥ महाग्निजननी चैषा सर्व्वज्वरविनाशिनी । एकजं द्वन्द्वजञ्चैव चिरकालसमुद्भवम् । ऐकाह्निकं द्व्याह्निकञ्च त्रिदोष-प्रभवं ज्वरम् ॥ चातुर्थकं तथात्युग्रं जलदोषसमुद्भवम् । सर्व्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा । महाज्वरान्तको नाम रसोऽयं मुनिभाषितः ॥

### *Maha'-jwara'ntaka rasa.*

Equal quantities of mercury, sulphur copper, cinnabar, orpiment, iron, tin, copper pyrites, calamine, realgar, gold, mica, red-ochre, borax, and silver, are to be mixed together and subjected to bha'vana', for three days, with the juices or decoctions of lime fruit, leaves of tulasi, roots of chitraka, leaves of bhanga', and leaves of tamarind. Pills are then to be made, two ractis in weight, each, and dried in a shady place. It cures all sorts of visama-jwara, including aika'hika, dwa'hika, and cha'turthaka, and nava-jwara, including sa'nni-pa'tika. It also increases power of digestion.

### ज्वरान्तक रसः ।

रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कणम् । रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् ॥ कट्फलं दन्तीवीजञ्च प्रत्येकं मरिचोन्मितम् ।

ज्वरान्तको रसो नाम मर्द्दयेद् याममात्रकम् ॥ माषैकेन निहन्त्याशु ज्वरं जीर्णं त्रिदोषजम् ॥

*Jwara'ntaka rasa.*

One part of mercury, two parts of sulphur, two parts of borax, one part of aconite, five parts of maricha, five parts of katphala, and five parts of croton seeds are to be rubbed together for three hours, and made into pills, six ractis in weight each. It cures jwirna jwara and sa'nnipatika' jwara.

ज्वरसूदन रसः ।

शुद्धसूतं तथा गन्धं वीजं कनकसम्भवम् । महौषधं टङ्कनञ्च हरितालं तथा विषम् ॥ भृङ्गराजाम्बुना सर्व्वं मर्द्दयित्वा वटीं चरेत् । खादेद् गुञ्जप्रमाणां तां यथादोषानुपानतः । रसोयं ज्वरसूदनो विषमज्वरनाशनः । ज्वरातिसारमन्दाग्नीन् नाशयेदविकल्पतः ॥

*Jwara sudana rasa.*

Equal quantities of mercury, sulphur, seeds of dhutura', shunthi, borax, orpiment, and aconite are to be rubbed with the juice of bhringara'ja leaves, and made into pills, one racti in weight each. Accompaniment, according to the nature of the dosha. This medicine cures visama jwara, fever with diarrhœa, and indigestion.

ज्वरनिसूदन रसः ।

शुद्धसूतं तथा गन्धं कर्षमानं नयेद् वुधः । महौषधं टङ्कनञ्च

हरितालं तथा विषम् ॥ रसार्द्धं मर्द्दयेत् खल्ले भृङ्गराजरसेन तु ।
त्रिदिनं भावनां दत्त्वा चतुर्थे वटिकां ततः ॥ कुर्य्याद्गुञ्जकमात्राञ्च
पिप्पलीमधुसंयुताम् । ज्वरनिसूदनो नाम विषमज्वरनाशनः ॥

*Jwaranisudana rasa.*

One tola' each of mercury and sulphur, half a tola' each of shunthi, borax, orpiment, and aconite are to be rubbed together, and subjected to bha'vana', for three days, with the juice of bhringara'ja leaves. Pills are then to be made, on the fourth day, two ractis in weight each. Accompaniment, honey and powdered pippali. It cures visama jwara

## चूड़ामणि रसः ।

मृतं सूतं प्रवालञ्च स्वर्णं तारञ्च वङ्गकम् । शुल्वं मुक्ता तीक्ष्णमभ्रं सर्व्वमग्निर्विमर्द्दयेत् ॥ चूड़ामणिरसो ह्येष लब्धः शिव-प्रसादतः । वल्लमात्रप्रयोगेन नाशयेद् विविधं गदान् ॥ धातुस्थं सन्निपातोत्थं ज्वरं विषमसम्भवम् । कामशोकसमुद्भूतं त्रिदोष-जनितं तथा ॥ कासं श्वासञ्च विविधं शूलं सर्व्वाङ्गसंभवम् । शिरोरोगं कर्णशूलं दन्तशूलं गलग्रहम् ॥ वातपित्तसमुद्भूतां ग्रहणीं सर्व्वसंभवाम् । आमवातं कटीशूलमग्निमान्द्यं विसूचिकाम् ॥ अर्शांसि कामलां मेहं मूत्रकृच्छ्रादिकञ्च यत् । तत् सर्व्वं नाशयत्याशु विष्णुचक्रमिवासुरान् ॥

*Chhura'mani rasa.*

Equal quantities of incinerated mercury, coral, gold, silver, tin, copper, pearls, steel, and mica are to be rubbed

together with water, and made into pills, three ractis in weight, each. This medicine cures sa'nnipa'tika fever, chronic fever, and fever due to an excess of sexual desire and grief, cough due to an excess of the three doshas, asthama all sorts of colic, head diseases, pain in the ears and teeth, galagraha, chronic diarrhœa due to an excess of va'yu and pittam, rheumatism, lumbago, loss of power of digestion. cholera, piles, and spermatorrhœa.

## ज्वरनृसिंह रसः।

पारदं गन्धकं तालं भल्लातकस्तथैव च। वज्रीक्षीरसमायुक्तमेकत्र च विमर्द्दयेत्॥ मृत्तिकाभाजने स्थाप्यं मुद्रितव्यं विचक्षणैः। अग्निं प्रज्वालयेत् तत्र प्रहरद्वयसंख्यया॥ शीतलं खल्लयेत् तत्र भावना च प्रदीयते। भृङ्गराजरसैरत्र गण्डदूर्व्वाभवैः रसैः॥ चित्रकस्य रसेनापि भावना दीयते पुनः। पश्चात् तच्चूर्णयेद् यत्नात् कूपिकायाञ्च धारयेत्॥ ज्वर उत्पद्यते यस्य चतुर्थे चापरे पुनः। माषैकश्च रसो देयस्तत्क्षणान्नाशयेज्ज्वरम्॥ ज्वरे शान्ते परं पथ्यं देयं मुद्गौदनं पयः।

*Jwara nrisingha rasa.*

Equal quantities of *mercury, sulphur, orpiment, and* bhalla'taka are to be rubbed together with the milk of snuhi, and subjected to heat by putam, for six hours. When cooled of itself, the medicine is to be taken out and subjected to bha'vana for three days with the juices of bhringara'ja leaves, ganda durba', and roots of chitraka, and then powdered. This medicine cures cha'turthaka and other chronic fevers.

Diet, soup of mudga grams, and milk, to be given after remission of fever.

## कस्तूरीभूषण रसः ।

सुवर्णसिन्दुरं स्वर्णं लौहं तारं मृगाण्डजम् । जातीफलं जातीकोषं लवङ्गञ्च त्रिकण्टकम् ॥ कर्पूरं गगनञ्चैव चोचं मूषलतालकम् । प्रत्येकं कर्षमानन्तु तुरङ्गञ्च द्विकार्षिकम् ॥ विद्रुमं भस्मसूतञ्च मौक्तिकं माक्षिकं तथा । राजपट्टं शिखिग्रीवं सर्व्वं संचूर्ण्य यत्नतः ॥ खल्ले तु चूर्णमादाय भावयेत् परिकीर्त्तितैः । निर्गुण्डीफञ्जिकावासारविमूलत्रिकण्टकैः ॥ ज्वरमष्टविधं हन्ति कस्तूरीभूषणो रसः ।

### *Kasturi bhusana rasa.*

One tola' each of swarna sinduram, gold, iron, silver, musk, ja'tiphalam, ja'tikosam, cloves, gokshura, camphor, mica, cardamoms, musali, and orpiment and two tola's each of copper, coral, incinerated mercury, pearls, copper pyrites, ra'ja'varta, and copper sulphate are to be rubbed together and subjected to bha'vana' with the juice or decoction of each of the following :—leaves of nirgundi, bha'rgi, bark of va'saka, roots of arka and gokshura. Pills are then to be made one racti in weight each. It cures all sorts of fevers.

## सुवर्णादि रसः ।

सुवर्णं रससिन्दुरं प्रवालं वङ्गमेव च । लौहं ताम्रं तेजपत्रयमानिविश्वभेषजम् ॥ सैन्धवं मरिचं कुष्ठं खदिरं द्विहरिद्रकम् ।

रसाञ्जनं माक्षिकञ्च समभागञ्च कारयेत् ॥ वारिणा वटिका कार्य्या रक्तिद्वयप्रमाणतः । भक्षयेत् प्रातरुत्थाय सर्व्वज्वरकुलान्तकृत् ॥

*Subarna'di rasa.*

Equal quantities of gold, rasa sinduram, coral, tin, iron, copper, tejapatram, jama'ni, shunthi, rock salt, maricha, kustham, khadira, haridra' da'ruharidra', rasa'njanam, and copper pyrites are to be rubbed together with water and made into pills, two ractis in weight, each. This medicine is to be taken in the morning. It cures all sorts of fever.

क्षेमसुन्दर रसः ।

भास्करो गन्धकः शर्व्वो देवी विड्ङ्गतीक्ष्णकम् । शोणितं गगनञ्चैव पुष्पकञ्च महेश्वरम् ॥ भूनिम्बादिगणैर्भाव्यं मधुना गुड़िका द्दढ़ा । चातुर्थकं तृतीयञ्च ज्वरं सन्ततकं तथा ॥ आमज्वरं भूतकृतं सर्व्वज्वरमपोहति । पूजितः सर्व्वलोकेषु रसोऽयं क्षेमसुन्दरः ॥

*Ksemasundara rasa.*

Equal quantities of copper, sulphur, mercury, sulphur, copper pyrites, iron, silver, mica puspa'njanam, and mercury are to be mixed together, and subjected to bha'vana with the decoction of bhunimbadigana (viz. kira'tatikta, devada'ru, shunthi, musta', katuki, indrajaba, dhanya', gajapippali, and the dashamulam). Pills are then to be made two ractis in weight each to be taken with the accompaniment of honey only. This medicine cures all sorts of rheumatic fever and such chronic fevers as tritiyaka, cha'turthaka, and fever due to the influence of evil spirits.

## गिरिशकरुणा रसः ।

रसं गन्धं विषं लौहं धूर्त्तवीजन्तु तत् समम् । द्वौ भागौ ताम्रवह्नेश्च व्योषचूर्णञ्च तत्समम् ॥ जम्बीरस्य च मज्जाभि रार्द्रकस्य रसैर्युतम् । द्विगुञ्जां वटिकां खादेज्ज्वरमाशु व्यपोहति ॥ वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम् । ऐकाह्निकं द्व्याह्निकञ्च चातुर्थकविपर्य्ययम् ॥ असाध्यञ्चापि साध्यञ्च ज्वरञ्चैवातिदुस्तरम् । अग्निमान्द्येऽप्यजीर्णे च आध्मानेऽनिलसम्भवे ॥ अतिसारेऽर्द्दिते चैव अरोचकनिपीड़िते । ज्वरान् सर्व्वान् निहन्त्याशु भास्कर स्तिमिरं यथा । गिरिशकरुणा नाम सर्व्वज्वरव्यपोहकः ॥

### *Girisha karuna' rasa.*

One part each of mercury, sulphur, iron, aconite, and seeds of dhutura', and two parts each of copper, roots of chitraka, and trikatu are to be rubbed together with the juices of lime fruit and ginger, and made into pills, two ractis in weight, each. This medicine cures all sorts of fevers, both primary and chronic, and removes such of their symptoms as loss of appetite, indigestion, flatulence, facial paralysis, diarrhœa, and aversion to food.

## शर्वरीवल्लभ रसः ।

रसं गन्धं मृतं ताम्रं मृतमभ्रं फलत्रिकम् । त्र्यूषणं दन्तीवीजञ्च समं खल्ले विमर्द्दयेत् ॥ द्रोणपुष्पीरसैर्भाव्यं त्वजीर्णे शस्यते सदा । ज्वरमष्टविधं हन्ति सर्व्वशूलनिसूदनः ॥ गुञ्जैकं वा द्विगुञ्जं वा देयमार्द्रकवारिणा । शर्वरीवल्लभो रसो सर्व्वज्वरविनाशकः ॥

*Sharvari ballava rasa.*

Equal quantities of mercury, sulphur, copper, mica, triphala', trikatu, and seeds of croton are to be rubbed together and subjected to bha'vana' with the juice of dronapuspi. Pills are then to be made, two ractis in weight, each, to be dried in a shady place. Accompaniment, honey with ginger juice. This medicine is specially efficacious in a fever attended with indigestion. It cures all sorts of fevers and colic.

विषमज्वरे वमनप्रयोगः ।

कुमारीमूलकर्षकं पिवेत् कोष्णजलेन हि । वमनेन ज्वरं हन्ति विषमं सुचिरन्तनम् ॥

*Vomiting in visama jwara.*

One tola' in weight of the roots of kanya', pestled with water, and mixed with one tola' in weight of tepid water, is to be drunk for the purpose of vomiting which helps in curing visama jwara.

अञ्जन भैरवः ।

सूततीक्ष्णकणागन्धमेकांशं जयपालकम् । सर्वैस्त्रिगुणितं जम्भ-वारिणा च सुपेषितम् । नेत्राञ्जनेन हन्त्याशु सर्व्वोपद्रवमुद्धतम् ॥

*Anjana bhairava*

Equal quantities of mercury, iron, pippali, and sulphur,

and croton seeds three times in weight of all these combined, are to be rubbed together with lime juice and dried. A little of this compound, rubbed with water, and used as a collyrium, cures all sorts of sa'nnipa'tika fevers

### वातपित्तान्तक रसः ।

मृतसूताभ्रमुस्तार्कतीक्ष्णमाक्षिकतालकम् । गन्धकं मर्द्दयेत् तुल्यं यष्टिद्राक्षामृतारसैः ॥ धात्रीशतावरीद्रावैर्द्रवैः क्षीरविदारिजैः । दिनं दिनं विभाव्याथ सिताक्षौद्रयुता वटी ॥ माषमात्रं निहन्त्याशु वातपित्तज्वरं क्षयम् । दाहं तृष्णां भ्रमं शोषं वातपित्तान्तको रसः । सिताक्षीरं पिवेच्चानु यष्टिक्काथं सितायुतम् ॥

### *Va'tapitta'ntaka rasa.*

Equal quantities of mercury, sulphur, mica, musta' poison, copper, iron, copper pyrites, and orpiment are to be rubbed together, and subjected to bha'vana', for one day, each, with the juices of jastimadhu, grapes, guruchi, a'mala'ki, shata'bari and tuber of bida'ri. Pills are then to be made six ractis in weight, each. Accompaniment, sugar and honey. This medicine cures fever due to an excess of va'yu and pitta'm, consumption, sensation of heat, thirst, giddiness, and dropsy. Decoction of jastimadhu, mixed with sugar, is to be drunk, a little after taking this medicine.

### ज्वरकुञ्जरपारीन्द्र रसः ।

मूर्च्छितं रसकर्षैकं तदर्द्धं जारिताभ्रकम् । तारं ताप्यञ्च रसजं रसकं ताम्रकं तथा ॥ मौक्तिकं विद्रुमं लौहं गिरिजं

गैरिकं शिला। गन्धकं हेमसारञ्च पलार्द्धञ्च पृथक् पृथक्॥ क्षीरावी सुरवल्ली च शोथघ्नी गणिकारिका। भाटामला जोतुकिका च सतिक्ता तु सुदर्शना॥ अग्निजिह्वा पुतितैला सूर्पपर्णी प्रसारणी। प्रत्येकस्वरसं दत्त्वा मर्द्दयेत् त्रिदिनावधि॥ भक्षयेत् पर्णखण्डेन चतुर्गुञ्जाप्रमाणतः। मन्दाग्निकारको रोगसङ्करघ्नः प्रयोगराट्। सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान्। ज्वरान् सर्व्वान् निहन्त्याशु भास्कर स्तिमिरं यथा॥ कासं श्वासं प्रमेहञ्च सशोथां पाण्डु-कामलाम्। ग्रहणीं क्षयरोगञ्च सर्व्वोपद्रवसंयुतम्। ज्वरकुञ्जर-पारीन्द्रः प्रथितः पृथिवीतले॥

## *Jwara kunjara pa'rindra rasa.*

One tola' in weight of mercury in swoon (i.e. kajjali or rasa sinduram), half a tola of mica, and two tola's each of silver, copper pyrites, cinnabar, calamine (or zinc), copper, pearls, coral, iron, bitumen, red ochre, realgar, sulphur, and copper sulphate are to be mixed together, and subjected to bha'vana', for three times, each, with the juice of each of the following, in succession :—kshirika, tulasi, punarnaba', agnimantha, a'malaki, devada'li, katuki, padma guruchi, la'ngali. lata' kasturi (jyotismati), mudga parni, and prasa'rini. Dose, four ractis each, to be taken with honey and juice of betel leaves. This medicine cures all sorts of fever, asthma, cough, spermatorrhœa, anæmia, dropsy, jaundice, chronic diarrhœa, and wasting diseases with symptoms.

## त्र्याहिकारी रसः।

रसगन्धशिलातालं सर्व्वैस्तुल्यं विषं समम्। रसस्य द्विगुणं लौहं

रौप्यं लौहाद्धि सम्मितम्॥ पिचुमर्द्दरसेनापि विष्णुक्रान्तरसेन च। सर्व्वं संमर्द्य वटिकाः कुर्य्याद् गुञ्जात्रयोन्मिताः॥ हन्यादतिविषा-क्वाथसंयुतोऽयं रसोत्तमः। त्र्याहिकादीन् ज्वरान् सर्व्वान् रक्षांसीव रघूद्वहः॥

*Trya'hika'ri rasa.*

One part each of mercury, sulphur, realgar, and orpiment, four parts of ativisa', two parts of iron, and half a part of silver are to be rubbed together with the juices of bark of nimba and leaves of apara'jita', and made into pills, three ractis in weight, each. Accompaniment, honey and decoction of ativisa'. This medicine cures tritiyaka (see page. 40) and all other chronic fevers.

चतुर्थकारी रसः।

रसगन्धकलौहाभ्रहरितालं समांशिकम्। रसार्द्धप्रमितं हेम सर्व्वं खल्लोदरे क्षिपेत्॥ कृष्णधुस्तूरपयसा मुनिपुष्परसेन च। भावयित्वा वटी कार्य्या द्विगुञ्जफलमानतः॥ चम्पकद्रावयोगेन सेवितोऽयं रसेश्वरः। चतुर्थकादीन् निखिलान् निहन्याद्विषम ज्वरान्॥

*Chaturthaka'ri rasa*

Equal quantities of mercury, sulphur, iron mica, and orpiment, and gold half in quantity of mercury, are to be mixed together, rubbed with the juices of leaves of black dhutura' and flower of ba'saka, and made into pills, two ractis in weight each. Accompaniment, honey and juice of the bark

of champaka tree. This medicine cures chaturthaka and all other chronic fevers.

## विश्वेश्वर रसः ।

पारदं रसकं गन्धं तुल्यांशं मर्द्दयेद्रसे । अश्वत्थजे त्र्यहं पश्चाद्रसे कोलकमूलजे ॥ निदिग्धिकारसे काकमाचिकाया रसे तथा । द्विगुञ्जां वा त्रिगुञ्जां वा गोक्षीरेण प्रदापयेत् । रात्रिज्वरं निहन्त्याशु नाम्ना विश्वेश्वरो रसः ॥

### *Bishweshwara rasa.*

Equal quantities of mercury, sulphur, and calamine are to be mixed together, and subjected to bha´vana´, for three days each, with the juices of roots of ashwatha, roots of badari tree, leaves of kantaka´ri, and leaves of ka kama´chi. Pills are then to be made, two or three ractis in weight each, to be taken with cow's milk. It is a very good medicine for night-fever.

## चन्द्रनाथ ।

पारदो गन्धकश्चैव त्रिक्षारं लवणत्रयम् । गुग्गुलुर्वत्सनाभं च प्रत्येकन्तु द्विमाषिकम् ॥ कृष्णोन्मत्तजटानीरैर्भावयेत् समरारकम् । गोक्षुरेन्द्रकमारीषकरञ्जचित्रतेजिका ॥ भूकूरवककवल्लीभिस्त्रिफला-वृहतीरसैः । मर्द्दिता वटिका कार्य्या कृष्णलाफलसन्निभा ॥ ततो वटीद्वयं दत्त्वा यत्नैः शाल्यादिभि र्वृतिः । रसः सर्व्वज्वरं हन्ति-क्षणमात्रान्न संशयः ॥ रसोऽयं चन्द्रनाथाख्यः क्षणाद्रैव ज्वरं जयेत् ।

*Chandrana'tha rasa.*

One eighth tola in weight each, of mercury, sulphur, the three alkalies (viz swarjiksha'ra javaksha'ra, and borax, combined in equal quantities), three salts (viz. rock salt, bira salt, and sawvarchala salt, combined in equalquantities), guggulu, and aconite are to be mixed together and subjected to bha'vana', for seven times, with the juice of roots of black dhutura'. The compound is then to be rubbed with the juice or decoction of each of the following, in succession, and made into pills one racti in weight each :—gokshura, seeds of kutaja, ma'risa, karanja, roots of chitraka, lata'-kasturi, bhumijhinti, triphala', and brihati. Two such pills are to be taken at a time, and the body of the patient is to be covered with a thick piece of cloth, after he takes the medicine. This medicine cures all sorts of fevers, very soon.

पर्णखण्डेश्वर रसः ।

समांशं मर्द्दयेत् खल्ले रसं गन्धं शिलां विषम् । निर्गुण्डीस्वरसैर्भाव्यं त्रिवारञ्चार्द्रकद्रवैः ॥ गुञ्जैकं भक्षयेत् पर्णे ज्वरं हन्ति महाद्भुतम् ॥

*Parna khandeshwara rasa*

Equal quantities of mercury, sulphur, realgar, and aconite are to be mixed together, and subjected to bha'vana', for three times each, with the juices of leaves of nirgundi and ginger. Pills are then to be made, one racti in weight each, to be taken with a piece of betel-leaf. This cures fever wonderfully.

## रसराज रसः ।

भागैकं रसराजस्य भागश्च हेममाक्षिकात् । भागद्वयं शिलायाश्च गन्धकस्य त्रयो मताः ॥ तालकाद्दशभागाश्च शुल्वं स्याद् भागपञ्चकम् । भल्लातकात् त्रयो भागाः सर्व्वमेकत्र चूर्णयेत् ॥ वज्रीक्षीरप्लुतं कृत्वा दृढे मृण्मयभाजने । विधाय सुदृढां मुद्रां पचेद् यामचतुष्टयम् ॥ स्वाङ्गशीतं समुद्धृत्य खल्लयेत् सुदृढं पुनः । गुञ्जाचतुष्टयञ्चास्य पर्णखण्डेन दापयेत् ॥ रसराजः प्रसिद्धोऽयं ज्वरमष्टविधं जयेत् ।

### *Rasara'ja rasa*

One part of mercury, one part of copper pyrites, two parts of realgar, three parts of sulphur, ten parts of orpiment, five parts of copper, and three parts of bhalla'taka are to be rubbed together and saturated with the milk of snuhi. The compound is then to be kept inside a strong earthen pot, the mouth of which is to be closed by means of an earthen basin, the joint being cemented with mud and rags. The pot is then to be heated for twelve hours. When cooled by radiation of heat, the medicine is to be taken out and powdered very fine. Dose four ractis each, to be taken with honey and juice of betel leaves. This madicine cures all sorts of fevers.

## ज्वरारि रसः ।

हरदबलिरसानां शुल्वनागाभ्रकाणाम् । सुभगविटशिलानां सर्व्वमेकत्र योज्यम् ॥ विपिनकृपदलोत्थैर्भावितं शोषयेत् तत् । दिवसदशसमाप्तौ रक्तिकैकाश्च कुर्य्यात् ॥ एकैकां भक्षयेदस्य चार्द्रकस्य

रसैर्युताम् । क्षणादेव ज्वरं हन्ति ज्वरारिः स निगद्यते । सर्व्व-शूलविनाशी च कफपित्तविनाशनः ॥

### Jwara'ri rasa.

Equal quantities of cinnabar, sulphur, mercury, copper, lead mica, borax, bira salt, and realgar are to be mixed together, and subjected to bha'vana', for ten times, with the juice of leaves of a'ragbadha, and made into pills, one racti in weight each. Accompaniment honey and ginger juice. It cures fever very quickly. It pacifis an excess of kapha and pittam, and is also a good medicine for colic.

### ज्वराशनि रसः ।

रसं गन्धं सैन्धवञ्च विषं ताम्रं समं भवेत् । सर्व्वचूर्णसमं लौहं तत्समं चूर्णमभ्रकम् ॥ लौहे च लौहदण्डेन निर्गुण्ड्याः स्वरसेन च । मर्दयेद् यत्नतः पश्चान्मरिचं सूततुल्यकम् ॥ पर्णेन सह दातव्यो रसो रक्तिकसम्मितः । सर्व्वज्वरहरः श्रेष्ठो ज्वरान् हन्ति सुदारुणान् ॥ कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम् । धातुस्थं प्रबलं दाहं ज्वरं दोषत्रयोद्भवम् ॥

### Jwara'shani rasa.

Equal quantities of mercury, sulphur, rock salt, aconite, and copper, iron equal in quantity to all the above combined, and mica, equal to iron, are to be mixed together, and rubbed in an iron mortar with the juice of nirgundi leaves, by means of an iron rod. Again mix with the compound, powdered maricha, equal in quantity to mercury. Rub all these

together, and make into pills, one racti in weight each. Accompaniment, honey and juice of betel leaves. It cures all sorts of fevers, cough, and specially all sorts of chronic fevers fever affecting the dha'tus, a sensation of intense heat, and fever due to the excess of the three doshas.

### ज्वरकालकेतु रसः।

रसं विषं गन्धकताम्रकञ्च मनःशिलाभल्लातकतालकञ्च। विमर्द्य वज्रीपयसा समांशं गजाह्वयं तत्र पुटं विदध्यात्॥ द्विगुञ्जमस्यैव मधुप्रयुक्तं ज्वरं निहन्त्यष्टविधं महोग्रम्। पुरा भवान्यै कथितो भवेन नृणां हिताय ज्वरकालकेतुः॥

*Jwara ka'laketu rasa.*

Equal quantities of mercury, sulphur, aconite, copper, realgar, oily substance extracted trom seeds of bhalla'taka, and orpiment are to be rubbed together with the milk of snuhi, and subjected to heat by gajaputam. Pills are then to be made, two ractis in weight each, to be taken with honey. This medicine cures all sorts of fever.

### पार्वतीकरणा रसः।

रसगन्धकलौहानि ताम्रं तारं हिरण्यकम्। हरितालं खर्परञ्च कांस्यं वङ्गञ्च विद्रुमम्॥ मुक्तामाक्षिककाशीशं शिला च टङ्कणं समम्। कर्पूरञ्च समं दत्त्वा भावनासप्तसप्तकम्॥ भार्गी वासा च निर्गुण्डी नागवल्ली जयन्तिका। कारवेल्लं पटोलञ्च शक्राशनं पुनर्नवा॥ आर्द्रकञ्च ततो दद्यात् प्रत्येकं वारसप्तकम्। पार्वतीकरणा नाम

सर्व्वज्वरविनाशनः ॥ वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् । द्वन्द्वजं विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥ कासं श्वासं तथा शोथं पाण्डुरोगं हलीमकम् । प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत् ॥

*Pa'rvati karuna' rasa.*

Equal quantities of mercury, sulphur, iron, copper silver, gold, orpiment, calamine, bell-metal, tin, coral, pearls, copper pyrites, iron sulphate, realgar, borax, and camphor are to be mixed together, and subjected to bhava'na' for seven times each, in succession, with the juice or decoction of each of the following :—va'rgi, ba'saka, nirgundi, betel leaves, jayanti, ka'rabella, leaves of patola, leaves of bhanga', punarnaba', and ginger. Pills are then to be made, one racti in weight each. This medicine cures all sorts of fevers, cough, asthma, dropsy, anaemia, jaundice, enlargement of spleen and liver.

त्रिपुरारि रसः ।

हुताशमुखसंशुद्धं रसं ताम्रञ्च गन्धकम् । लौहमभ्रं विषं चैव सर्व्वं कुर्य्यात् समांशकम् ॥ रसार्द्धं मृतरूप्यञ्च शृङ्गवेराम्बुमर्द्दितम् । द्विगुञ्जं मधुना देयं सितयार्द्रकरसेन वा ॥ ज्वरमष्टविधं हन्ति वारिदोषभवं तथा । प्लीहानमुदरं शोथमतिसारं विनाशयेत् । रोगानेतान् निहन्त्याशु शङ्करस्त्रिपुरं यथा ॥

*Tripura'ri rasa*

Equal quantities of mercury, sulphur, copper, iron, mica, and aconite, and silver half in quantity of mercury, are to

be rubbed together with the juice of ginger, and made into pills, two ractis in weight, each. Accompaniment, sugar, or honey, or ginger juice with honey. This medicine cures all sorts of fevers, enlargement of spleen, udara-roga, dropsy, and diarrhœa.

## सर्व्वज्वराङ्कुश रसः।

शुद्धसूतं तथा गन्धं मरिचं नागरं कणाम्। त्वचं जैपालकं कुष्ठं भुनिम्वं मुस्तकं पृथक्॥ चूर्णयित्वा समांशन्तु कज्जल्या सह मेलयेत्। निर्गुण्ड्याः स्वरसे चापि आर्द्रकस्य रसे तथा॥ भावनां कारयित्वा तु वटिकां कारयेद् भिषक्। वटिकां भक्षयित्वा तु वस्त्रवेष्टञ्च कारयेत्॥ एषा सर्व्वज्वराङ्कुशा ज्वराणां कुलनाशिनी। पृथग् दोषांश्च विविधान् समस्तान् विषमज्वरान्॥ प्राकृतं वैकृतं वापि वातश्लेष्मकृतं तथा। अन्तर्गतं वहिःस्थञ्च निरामं साममेव वा। ज्वरमष्टविधं हन्ति वृक्षमिन्द्राशनिर्यथा॥

### *Sarva jwara'nkusha rasa.*

One part of mercury and one part of sulphur are to be rubbed together, and reduced to kajjali or black powder. Then, mix with this, one part each of the following:— maricha, shuthi, pippali, cardamom, croton seeds, kustham, kira'ta tikta, and musta (all finely powdered). The compound is then to be subjeceted bha'vana' with the juices of leaves of nirgundi and ginger, and made into pils, one racti in weight each. The body of the patient is to be covered with a piece of cloth, after he takes the medicine. It cures all sorts of fever.

## पुरुषोत्तमरसः ।

अभ्रं ताम्रं रसं गन्धं विषञ्चैव समम् समम् । द्विगुणं धुस्तूर-वीजञ्च व्योषं पञ्चगुणं मतम् ॥ आर्द्रकस्य रसेनैव वटी कार्य्या द्विगुञ्जिका । अनुपानं प्रयोक्तव्यं यथादोषानुसारतः ॥ पुरुषोत्त-मनामायं रसः सर्व्वज्वरप्रणुत् । वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ विषमाख्यं ज्वरं हन्ति धातुस्थं विषमज्वरम् । प्लीहानं यकृतं गुल्ममग्रमांसं सशोथकम् ॥ हिक्कां श्वासञ्च कासञ्च मन्दानलमरोचकम् । नाशयेन्नात्र सन्देहो वृत्तमिन्द्राशनि र्यथा ॥

### *Purusottama rasa.*

One part each of mica copper, mercury, sulphur, and aconite, two parts of seeds of dhutura', and five parts of trikatu are to be rubbed together with the juice of ginger, and made into pills, two ractis in weight each. Accompaniment is to be decided upon in consideration of the doshas. It cures all sorts of fever, enlargement of spleen or liver, gulma, dropsy, hiccough, asthma, cough, indigestion, and loss of appetite.

## ब्रह्मरन्ध्र रसः ।

रसाभ्रं गन्धकं तालं हिङ्गुलं मरिचं तथा । टङ्कनं सैन्धवोपेतं सर्व्वांशममृतं तथा ॥ सर्व्वपादसमोपेतमहिषीपित्तमर्द्दितम् । ब्रह्म-रन्ध्रे प्रयोक्तव्यं सन्यासाख्यानसङ्कमे ॥ सहस्रकलसैः स्नानं लेपनं चन्दनादिभिः । इक्षुमुद्गरसं भोज्यं तक्रभक्तं यथेप्सितम् ॥

*Brahma-randhra rasa.*

Equal quantities of mercury, sulphur, mica, orpiment, cinnabar, maricha borax, and rock salt, and aconite equal in quantity to all the above-mentioned combined, are to be rubbed together with the bile of a she-buffalo, equal to one fourth the weight of the foregoing materials combined. A little of this medicine is to be applied at the crown of the patient's head lacerated by means of a razor, at a time when he has lost his consciousness attacked by a sa'nnipa'tika fever. His body is then to be smeared with sandal paste, and plenty of cold water is to be poured over his head. He is then to be allowed such cooling diet as boiled rice mixed with curd, sugar cane soup of mudga grams etc.

स्वच्छन्दनायक रसः ।

सूतगन्धकलौहानि रौप्यं चैभिर्विमर्द्दयेत् । सूर्य्यावर्त्तश्च निर्गुण्डी तुलसी गिरिकर्णिका ॥ अग्निवल्लयार्द्रकं वह्निर्विजया जयया सह । काकमाचिरसश्चैवं पञ्चपित्तैश्च भावयेत् ॥ अन्ध मूषागतं पश्चाद् वालुकायन्त्रगं दिनम् । विपचेच्चूर्णितं खादेन्माष-कश्चार्द्रकद्रवैः ॥ निर्गुण्डीदशमूलानां कषायं सोषणं पिवेत् । अभिन्यासं निहन्त्याशु रसः स्वच्छन्दनायकः । मुद्गयूषमजादुग्धं पथ्यमत्र प्रयोजयेत् ॥

*Swach-chhanda-na'yaka rasa.*

Equal quantities of mercury, sulphur, iron, and silver are to be rubbed together, for three days, with the juices of the following :—surya'varta, nirgundi, tulasi, white apara'jita', agniballi,

ginger, chitraka roots, haritaki, bhanga', and ka'kama'chi. The compound is then to be subjected to bha'vana' with the biles of goat, hog fish, buffalo, and peacock, duly dried, confined in a blind crucible, and heated for twelve hours by means of the third kind of Baluka Jantram Six ractis in weight of this medicine is to be taken once a day with honey and ginger juice; decoction of nirgundi leaves and dasa mulam mixed with powdered maricha, being drunk a little after taking this medicine. This medicine cures abhinya'sa (the worst kind of Sa'nnipa'tika fever and menengitis). Diet, goat's milk and soup of mudga grams.

## श्लेष्मशैलेन्द्र रसः ।

गन्धकं पारदञ्चाभ्रं त्र्यूषणं जीरकद्वयम् । शठी शृङ्गी यमानी च पुष्करं रामठं तथा ॥ सैन्धवं यावशूकञ्च टङ्गणं गजपिप्पली । जातीकोषाजमोदे च लौहं यासलवङ्गकम् ॥ धुस्तरवीजं जैपालं कट्फलं चित्रकं तथा । प्रत्येकं कार्षिकञ्चैषां स्नक्ष्नचूर्णं प्रकल्पयेत् ॥ पाषाणे विमले पात्रे घृष्टं पाषाणमुद्गरैः । विल्वमूलरसं दत्त्वा चार्कचित्रकदन्तिकाः ॥ शिखरी काञ्जिका वासा निर्गुण्डी गणि-कारिका । धुस्तूरकृष्णजीरञ्च पारिभद्रकपिप्पली ॥ कण्टकार्य्या-र्द्वयोश्चैव मूलान्येतानि दापयेत् । एषां मूलरसं दत्त्वा घृष्टमातप-शोषितम् ॥ गुञ्जाप्रमाणां वटिकां कारयेत् कुशलो भिषक् । वटी-चतुष्टयं खादेत् नित्यमार्द्रकवारिणा ॥ उष्णतोयानुपानेन श्लेष्मव्याधिं व्यपोहति । विंशतिं श्लैष्मिकांश्चैव शिरोरोगांश्च दारुणान् ॥ प्रमेहान् विंशतिं चैव पञ्चगुल्मनिसूदनः । उदरान्यन्त्रवृद्धिञ्चाप्यामवातविनाशनः । पञ्चपाण्डामयान् हन्ति क्रिमिस्थौल्यामयानपि । सोदावर्त्तं ज्वरं

कुष्ठं गात्रकण्डुमयांस्तथा॥ यथा शुष्केन्धने वह्निस्तथा वह्नि-विवर्द्धनः।

*Shlesma-shailendra rasa.*

One tola' each of sulphur, mercury, mica, trikatu, jeera', black jeera', shathi, karkatashringi jama'ni puskara-mulam (or kustham), hingu, rock-salt, javaksa'ra borax. gajapippali. ja'tikosa, ajamoda', iron, dura'labha', cloves seeds of dhutura', katphala, and roots of chitraka are to be rubbed together, and subjected to bha'vana' with the juice or decoction of the roots of the following, in succession :—bilva, arka, chitraka, danti, apa'ma'rga, laghu jivanti, ba'saka, nirgundi, agnimantha, dhustura leaves, black jeera', pa'ri-bhadra, pippali, kantaka'ri, and ginger. Pills are then to be made, one racti in weight each. Accompaniment, juice of ginger, mixed with hot water. It cures all sorts of diseases, due to an excess of phlegm, and specially spermatorrhœa, head diseases, gulma, udararoga, hernia, rheumatism, anæmia, worms, obesity, uda'varta, fever and skin diseases. It increases appetite.

पर्पटीरसः

शुद्धसूतं द्विधा गन्धं मर्द्दं भृङ्गरसेन च। मृतं ताम्रं लौह-भस्म पादांशेन तयोः क्षिपेत्॥ लौहपात्रे च विपचेच्चालयेत् लौह चाटुना। तत् क्षिपेत् कदलीपत्रे गोमयोपरि संस्थिते॥ पश्चाच्च चूर्णयेद् खल्वे निर्गुण्ड्या भावयेद् दिनम्। जयन्तीत्रिफलाकन्या-वासाभार्गीकटुत्रिकैः॥ भृङ्गाग्निमुलमुण्डीभिर्भावयेद्दिनसप्तकम्। अङ्गारैः स्वेदयेत् किञ्चित् पर्पट्याख्यो महारसः॥ चतुर्गुञ्जामितो

भक्ष्यः सम्यक् श्लेष्मज्वरं जयेत् । पथ्याशुण्ठ्यामृतक्वाथमनुपानं प्रयोजयेत् ॥

*Parpati rasa*

One part of mercury, and two parts of sulphur are to be rubbed together and made into a black powder, which is then to be rubbed with the juice of bhringara'ja. The compound is then to be mixed with one fourth its quantity of copper and iron, each, and the whole thing is to be heated in an iron pot, the substance being rolled, over and over again, by means of an iron rod, in course of the heating. When sufficiently melted, the medicine is to be poured upon a banana leaf placed upon cowdung, and immediately presed by a bundle, made of another piece of a banana leaf containing, within it, a quantity of cowung. When solidified and cooled, the medicine is to be powdered, and subjected to bha'va'na', for one day, with the juice of the leaves of nirgundi. It is then to be subjected to bha'vana', for seven days, with the juice or decoction of the following, combined :—jayanti, triphala', kanya', va'saka, bha'rgi, trikatu, bhringara'ja, roots of chitraka, and mundiri This medicine cures all sorts of fever due to an excess of phlegm. Accompaniment, honey with the decoction of haritaki, shunthi, and guruchi.

लौहसमस्त रसः ।

चित्रकं त्रिफला व्योषं विड़ङ्गं मुस्तकं तथा । श्रेयसी पिप्पलीमुलमुशीरं देवदारु च ॥ किराततिक्तकं वालं कटुकी कण्टकारिका । शोभाञ्जनस्य वीजञ्च मधुकं वत्सकं समम् ॥ लौहं सर्वसमं

ग्राह्यं लौहतुल्या च कज्जली। वारिणा मर्द्दनात् सर्वं माषमात्रां वटीं चरेत्॥ लौहसमस्तनामायं रसो ज्वरकुलान्तकः। प्लीहा-नमग्रमांसञ्च यकृतञ्च विनाशयेत्॥

*Lauha samasta rasa.*

Equal quantities of roots of chitraka, triphala', trikatu., biranga, musta', gajapippali, roots of pippali, ushira, devada'ru, chitraka, ba'la', katuki, kantaka'ri, seeds of sobhanjanam, jastimadhu, and indrajava are to be mixed with iron and kajjali (black sulphuret of mercury), each equal in quantity to all the materials from "roots of chitraka' to "indrajava' combined. All these are then to be rubbed together with water, and made into pills, six ractis in weight, each. This medicine cures all sorts of fever and enlargement of spleen and liver.

लक्ष्मीविलास रसः।

पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ। तदर्द्धं चन्द्रसंज्ञस्य जाती-कोषफले तथा॥ वृद्धदारकवीजञ्च वीजं धुस्तूरकस्य च। त्रैलोक्य-विजयावीजं विदारीमूलमेव च॥ नारायणी तथा नागवला चाति-वला तथा। वीजं गोक्षुरकस्यापि नैचुलं वीजमेव च॥ एतेषां कार्षिकं चूर्णं पर्णपत्ररसैः पुनः। निस्पिष्य वटिका कार्य्या त्रिगुञ्जा-फलमानतः॥ निहन्ति सन्निपातोत्थान् गदान् घोरांश्चतुर्व्विधान्। वातोत्थान् पैत्तिकांश्चैव नास्त्यत्र नियमः क्वचित्॥ कुष्ठमष्टा-दशाख्यांश्च प्रमेहान् विंशतिं तथा। नाड़ीव्रणं व्रणं घोरं गुदामयं भगन्दरम्॥ श्लीपदं कफवातोत्थं रक्तमांसाश्रितञ्च यत्। मेदोगतं धातुगतं चिरजं कुलसम्भवम्॥ गलशोथमन्त्रवृद्धिमतिसारं सुदारुणम्।

आमवातं सर्व्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ उदरकर्णनासाक्षि-मुखवैकृतमेव च । कासपीनसयक्ष्मार्शः स्थौल्यदौर्गन्ध्यनाशनः ॥ सर्व्वशूलशिरःशूलप्रमदागदसूदनः । वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ॥ अनुपानमिह प्रोक्तं मांसपिष्टं पयोदधि । वारिभक्त-सुरासीधु-सेवनात् कामरूपधृक् ॥ वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रस्य संक्षयः । न च लिङ्गस्य शैथिल्यं न केशो यान्ति पक्कताम ॥ नित्यं स्त्रीणां शतं गच्छन् मत्तवारणविक्रमः । तार्क्ष्येन्द्रसंनिभा दृष्टि र्जायते पौष्टिकः परः ॥

*Laksmi-bila'sa rasa*

Four tola's in weight of mica, two tola's of mercury and sulphur each, and one tola' each of briddhada'raka, seeds of dhustura, seeds of bhanga', roots of shata'bari. roots of na'gabala', roots of atibala', seeds of gokshura, and samudra phalam are to be rubbed together with the juice of betel leaves, and made into pills three ractis in weight each. It cures all sorts of fevers, leprosy, spermatorrhœa, ulcer, fistula, philaria, scrofula, hernia rheumatism, paralysis of the tongue, udara-roga, cough, pinasa, piles, obesity, etc. It is a good aphrodisiac. It is desirable to take meat or milk, after taking this medicine.

महाराजरसः ।

रसगन्धकमभ्रञ्च प्रत्येकं कर्षसम्मितम् । वृद्धदारकवङ्गञ्च लौहं कर्षार्द्धकं क्षिपेत् ॥ स्वर्णं ताम्रं कर्पूरञ्च प्रत्येकं कर्षपादिकम् । शक्राशनं वरी चैव श्वेतसर्ज्जं लवङ्गकम् ॥ कोकिलाक्षं विदारी च

मुषली शूकशिम्बिकम्। जातीफलं तथा कोषं बला नागबला तथा॥ माषद्वयमितं भागं तालमूल्या रसेन च। पिष्ट्वा च वटिका कार्य्या चतुर्गुञ्जाप्रमाणत:॥ मधुना भक्षयेत् प्रात र्विषमज्वरशान्तये। धातुस्थांश्च ज्वरान् सर्व्वान् हन्यादेव न संशय:॥ वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्। ज्वरं नानाविधं हन्ति कासं श्वासं क्षयं तथा॥ बलपुष्टिकरं नित्यं कामिनीं रमयेत् सदा। न च शुक्रं क्षयं याति न बलं ह्रासतां व्रजेत्॥ ऊर्द्धगं श्लेष्मणं हन्ति सन्निपातं सुदारुणम्। कामलां पाण्डुरोगञ्च प्रमेहं रक्तपित्तकम्॥ महाराजरस: ख्यातो राजयोग्यश्च सर्व्वदा॥

*Maha'ra'ja rasa.*

One tola', each, of mercury, sulphur, and mica ; one fourth tola', each, of seeds of briddha-da'raka, tin, and iron ; one fourth tola' of gold, copper, and camphor, each, and one eighth tola', each, of seeds of bhanga', shata'bari, white resin, cloves, kokila'ksha, bida'ri, musali, ba'nari, ja'tiphala, ja'tikosa, bala', and na'gabala' are to be rubbed together with the juice of musali, and made into pills, four ractis in weight, each. Accompaniment, honey only. It cures all sorts of fevers, cough, asthma, consumption, jaundice, anæmia, and hemeptosis.

द्विपलं जारितं लौहं रसं गन्धं त्रितोलकम्। तोलकं त्रिफला व्योषं विडङ्गं मुस्तकं तथा॥ श्रेयसी पिप्पलीमूलं हरिद्रे द्वे च चित्रकम्। आर्द्रकस्य रसेनैव वटिकां कारयेद् भिषक्॥ गुञ्जाद्वयां वटीं कृत्वा भक्षयेदार्द्रकद्रवै:। सर्व्वज्वरहरं लौहं सर्व्वज्वर

विनाशनम् ॥ वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् । विषमज्वरभूतोत्थज्वरं प्लीहानमेव च ॥ मासजं पक्षजञ्चैव तथा संवत्सरोत्थितम् । सर्व्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा ॥

## *Sarva jwara hara lauham.*

Eight tola's in weight of iron, three tola's of mercury, three tola's of sulphur, and one tola', each, of tirphala'. trikatu, biranga, musta', gajapippali, roots of pippali, haridra', da'ru haridra', and roots of 'chitraka are to be rubbed together with ginger juice, and made into pills, two ractis in weight, each. Accompaniment, honey and ginger juice. It cures all sorts of fever and enlargement of spleen.

## कल्पद्रुम रसः ।

रसं गन्धं विषं ताम्रं समभागं विचूर्णयेत् । भावयेत् पञ्चभिः पित्तैः क्रमशः पञ्चवासरम् । निर्गुण्डीस्वरसेनैव मर्द्दयेत् सप्तवासरम् । आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुनः ॥ सर्षपाभा वटी कार्य्या छायया परिशोषिता । ततः सप्तवटी योज्या यावन्न त्रिगुणा भवेत् ॥ वयोऽग्निदोषकं बुद्ध्वा प्रयोज्या भिषजां वरैः । वायुरर्थमनुपानं च कज्जलीपिप्पलीयुतम् ॥ पानशेषे तु प्रस्वाप्य वस्त्रै राच्छादयेन्नरम् । घर्म्माभ्यागमनं यावत् ततो रोगात् प्रमुच्यते ॥ रोगिनं स्नापयित्वा तु भोजयेत् ससितं दधि । एष कल्पद्रुमो नाम रसः परमदुर्ल्लभः ॥ असाध्यं चिरकालोत्थं जीर्णञ्च विषमज्वरम् । हन्ति ज्वरातिसारौ च ग्रहणीं पाण्डुकामलाम् । न देयः श्वासकासे च शूलयुक्ते नरे तथा ॥

*Kalpadruma rasa.*

Equal quantities of mercury, sulphur, aconite, and copper are to be mixed together, and subjected to bhavana with the biles of boar, goat, buffalo, rohita fish, and peacock, in succession; then, for seven days, with the juice of leaves of nirgundi, and, for three days, with ginger juice. Pills are then to be made of the size of a mustard seed, which are to be dried in a shady place. Having regard to the doshas, power of digestion, and age of the patient, seven to twenty one of such pills may be given, a day, to him, who is to sleep, covered with a piece of cloth so long as he does not perspire. After sleep, he is to drink some curd, mixed with sugar. Accompaniment of this medicine, one racti of black sulphuret of mercury, mixed with powdered pippali, and a little of hot water. This medicine cures even an obstinate jirna-jwara, visama jwara, fever with diarrhœa, both acute and chronic, anæmia, and jaundice. This medicine is not to be given to a patient suffering from asthma, cough, and colic.

कल्पतरु रसः ।

शुद्धं शङ्करशुक्रमक्षतुलितं मारारिनारीरज स्तद्वत् तावदुमापति-स्फुटगलालङ्कारवस्तु स्मृतम् । तावतैव मनःशिला च विमलस्तावत् तथा टङ्कनम् शुण्ठी द्व्यक्षमिता कणा च मरिचं दिक्पालसंख्याक्षकम् ॥ विषादिवस्तूनि शिलोपरिष्टाद् विचूर्णयेद्वाससि शोधयेच्च । ततस्तु खल्ले रसगन्धकौ च चूर्णञ्च तद्यामयुगं विमर्द्दयम् ॥ कल्पतरुर्नाम-धेयो यथार्थनामा रसः श्रेष्ठः । समीरणश्लेष्मगदान् हरते. मात्रास्य स्मृता गुञ्जैका ॥ आर्द्रकेन सममेष भक्षितो हन्ति वातकफसम्भवं

ज्वरम् । श्वासकासमुखसेकशीततावह्निमान्द्यविसूचीश्च नाशयेत् ॥ नस्यनासावेव हरति शिरोऽर्त्तिं कफवातजाम् । मोहं महान्तमपि च प्रलापं क्षवथुग्रहम् ॥

*Kalpataru rasa.*

One tola', each, of mercury, sulphur, aconite, realgar, bimala, and borax ; two tola's, each, of shunthi and pippali, and ten tola's of maricha are to be rubbed together and reduced to a very fine powder. Mercury and sulphur are first of all to be rubbed together to form a kajjali or black powder, before they are mixed with the powders of the other ingredients. Dose, one racti, to be taken with honey and ginger juice. This medicine cures asthma, cough, constant discharge of sticky water from the mouth, coldness, indigestion, cholera, and fever due to an excess of va'yu and phelgm. The snuff of this medicine cures diseases of the head, due to an excess of kapha and va'yu, loss of consciousness, delirium, and stop of sneezing.

### विद्यावल्लभ रसः ।

रसञ्चैकशिलातालाश्चन्द्रद्व्यग्न्यर्कभागिकाः । पिष्टा तान् सुषवीतोयैस्ताम्रपात्रोदरे क्षिपेत् ॥ न्यस्तं शरावे संरुध्य वालुकायन्त्रगं पचेत् । स्फुटन्ति व्रीहयो यावत् तच्छिरःस्थाः शनैः शनैः ॥ संचूर्ण्य शर्करायुक्तं द्विगुञ्जं भक्षयेत् ततः । विषमाख्यान् ज्वरान् हन्ति तैलाम्लादि विवर्जयेत् ॥

*Vidya'-ballabha rasa.*

One part of mercury, two parts of copper, three parts

of realgar, and twelve parts of orpiment are to be rubbed together with the juice or decoction of black jeera', and kept in a pot made of copper, which is to be confined within two earthen basins, the joint of which is to be duly closed before it is heated by means of the third kind of ba'luka' jantram, till paddy seeds kept upon the jantram burst. When cooled by radiation of heat, the medicine is to be taken out and powdered. Dose two ractis each, to be taken with sugar only. It cures all sorts of chronic fever. Anointing the body with oil, taking sours, etc., are to be absolutely prohibited while taking this medicine.

## जयमङ्गल रसः।

हिङ्गुलसम्भवं सूतं गन्धकं शुद्धटंकणम्। ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा॥ समं सर्व्वं समाहृत्य द्विगुणं स्वर्णभस्मकम्। तदर्द्धं कान्तलौहञ्च रूप्यभस्मापि तत्समम्॥ एतत् सर्व्वं विचूर्ण्याथ भावयेत् कनकद्रवैः। शेफालिदलजैश्चापि दशमूलरसेन च॥ किराततिक्तकक्वाथैस्त्रिवारं भावयेत् सुधीः। भावयित्वा ततः कार्य्या गुञ्जाद्वयमिता वटी॥ अनुपानं प्रयोक्तव्यं जीरकं मधुसंयुतम्। जीर्णज्वरं महाघोरं चिरकालसमुद्भवम्॥ ज्वरमष्टविधं हन्ति समस्तान् विषमज्वरान्। मेदोगतं मांसगतमस्थिमज्जगतं तथा। अन्तर्गतं महाघोरं वहिःस्थञ्च विशेषतः॥ नानादोषोद्भवञ्चैव ज्वरं शुक्रगतं तथा। निखिलं ज्वरनामानं हन्ति श्रीशिवशासनात्॥ जयमङ्गलनामायं ख्यातः शिवप्रसादतः। वलपुष्टिकरश्चैव सर्व्वरोगनिवर्हणः॥

### *Jaya mangala rasa.*

One eighth tola', each, in weight of mercury, sulphur,

borax, copper, tin, copper pyrites, rock salt, and maricha, one fourth tola' of gold, and one eighth tola', each, of iron and silver are to be mixed together, and subjected to bha'vana', for three times, each, with the following, in succession :—juice of dhutura' leaves, juice of shepha'li leaves, decoction of the dashamulam, and decoction of kira'tatikta. Pills are then to be made, two ractis in weight each. Accompaniment, honey with powdered jeera'. It cures all sorts of fever It is a good medicine for strength and nutrition. (Some are of opinion that the text in sanskrit is to be so interpreted as to mean two tola's of gold, one tola' of iron, and one tola' of silver, in the above recipe).

### विषमज्वरान्तक रसः ।

हिङ्गुलसम्भवं सूतं गन्धेन कज्जलीकृतम् । पर्पटीरसवत् पाच्यं सूतांघ्रि हेमभस्मकम् ॥ लौहं ताम्रमभ्रकञ्च रसस्य द्विगुणं तथा । वङ्गकं गैरिकञ्चैव प्रवालञ्च रसार्द्धकम् ॥ मुक्ताशङ्खं शुक्तिभस्म प्रदेयं रसपादिकम् । मुक्तागर्भे च संस्थाप्य लघुपुटेन पाचयेत् ॥ भक्षयेत् प्रातरुत्थाय द्विगुञ्जाफलमानतः । अनुपानं प्रयोक्तव्यं कणाहिङ्गु ससैन्धवम् ॥ ज्वरमष्टविधं हन्ति वातपित्तकफोद्भवम् । प्लीहानं यकृतं गुल्मं साध्यासाध्यमथापि वा ॥ सन्ततं सतताख्यञ्च विषमज्वरनाशनम् । कामलां पाण्डुरोगञ्च शोथं मेहमरोचकम् ॥ ग्रहणीमामदोषं च कासं श्वासञ्च तत्र तत् । मूत्रकृच्छ्रातिसारञ्च नाशयेदविकल्पतः ॥ अग्निञ्च कुरुते दीप्तं वलवर्णप्रसादनः । विषमस्य ज्वरस्यायमन्तकः कथितो भुवि ॥

*Visama jwara'ntaka rasa.*

Four parts each, of mercury and sulphur are to be rubbed

well to form a black powder, which is to be melted in the way referred to in "parpati . rasa" (see page 166). The solidified compound is then to be powdered very fine, and mixed with one part of gold, eight parts, each, of iron, copper, and mica ; two parts, each, of tin, red ochre, and coral ; and one part, each, of pearls conch shell, and oyster shell are to be mixed together with water, and confined within two oyster shells, which are to be coated with mud and dried. This is then to be heated, by means of the la'baka putam. When cooled by radiation of heat, the medicine is to be taken out. Accompaniment, powdered pippali, hingu, and rock-salt, with a few drops of honey. It cures all sorts of fever, anæmia, jaundice, spleen, liver, dropsy, spermatorrhœa, averssion to food, and chronic diarrhœa.

## षड़ानन रसः ।

आरं कांस्यं मृतं ताम्रं दरदं पिप्पलीं विषम् । तुल्यांशं मर्द्दयेत् खल्ले यामञ्च गुड़ूचीरसैः ॥ मधुना मर्द्दयित्वा तु गुञ्जामात्रं लिहेत् सदा । ज्वरे मन्दानले चैव वातपित्तज्वरेषु च ॥ ज्वरे वैषम्यतरुणे जीर्णज्वरे विशेषतः । मुद्गान्नं मुद्गयूषं वा तक्रभक्तञ्च केवलम् ॥ नारिकेलोदकं देयं मुद्गपथ्यं विशेषतः । षड़ाननो रसो नाम सर्व्वज्वरकुलान्तकः ॥

### *Sara'nana rasa.*

Equal quantities of brass, bell-metal, copper, cinnabar, pippali, and aconite are to be rubbed together, for three hours, with the juice of guruchi, and made into pills, one

racti in weight each, to be taken with honey. This medicine cures all sorts of fevers including jeerna-jwara and indigestion. Diet, soup of mudga grams, butter milk. and cocoanut water.

## वसन्तमालतीरसः ।

स्वर्णं मुक्ता दरदमरिचं भागवृद्ध्या प्रदिष्टम् खर्पराष्टौ प्रथममखिलं मर्द्दयेन् म्रक्षणेन् । यावत् स्नेहो व्रजति विलयं निम्बुनीरेन तावद् गुञ्जाद्वन्द्वं मधुचपलया मालतीप्रागवसन्ता ॥ सेवितेयं हरेत् तूर्णं जीर्णञ्च विषमं ज्वरम् । व्याधीनन्यांश्च कासादीन् प्रदीप्तं कुरुतेऽनलम् ॥

*Basanta ma'lati rasa.*

One part of gold, two parts of pearls, three parts of cinnabar, four parts of maricha, and eight parts of calamine are, first of all, to be rubbed with a little of butter, and then with the juice of lime fruit, so long as the oily part of the butter does not disappear altogether. Pills are then to be made, two ractis in weight each, to be taken with powdered pippali and honey. This medicine cures jeerna-jwara, visama jwara, and cough It also increases power of digestion.

## विषमज्वरहृद् रसः ।

पारदं गन्धकं तुल्यं सूतार्द्धं जीर्णताम्रकम् । ताम्रतुल्यं माक्षिकञ्च लोहं सर्व्वसमं नयेत् ॥ जयन्त्याः स्वरसेनैव कोकिलाक्षरसेन च । वासकार्द्रपर्णरसैः पञ्चधा च विमर्द्दयेत् ॥ पृथक् कलायमानां तु वटिकां कारयेद् बुधः । विषमज्वरहृद्रसो विषमज्वर-

नाशन: ॥ वह्निदीप्तिकरो हृद्य: प्लीहगुल्मविनाशन: । चक्षुष्यो बृंहणो वृष्य: श्रेष्ठ: सर्व्वरुजापह: ॥

## *Visama-jwara-hrid rasa.*

Two parts, each, of mercury and sulphur, one part each of copper and copper pyrites, and six parts of iron are to be rubbed together, for five times each, with the juices of the following, in succession :—leaves of jayanti, leaves of kokila'ksha, leaves of va'saka, ginger, and betel leaves. Pills are then to be made, two ractis in weight, each. This medicine cures visama jwara, gulma, and enlarged spleen. It increases power of digestion is beneficial to eye-sight, increaser of strength and nutrition, and curer of almost all the diseases.

## पूर्णानन्द रस: ।

पारदं गन्धकं शुद्धं ताम्रमभ्रञ्च माक्षिकम् । हिरण्यं तारतालञ्च कर्षमेकं पृथक् पृथक् ॥ मृतकान्तं पलं देयं सर्व्वमेकीकृतं शुभम् । वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं दिनसप्तकम् ॥ कारवेल्ल-रसेनापि दशमूलरसेन च । पर्पटस्य कषायेण क्वाथेन त्रिफलेन च ॥ गुड़ुच्या: स्वरसेनापि नागवल्लीरसेन च । काकमाचीरसेनैव निर्गुण्ड्या: स्वरसेन च ॥ पुनर्नवार्द्रकाम्भोभिर्भावनां परिकल्प्य च । रक्तिकाद्विक्रमेनैव वटिका: कारयेद्भिषक् ॥ पिप्पलीगुड़संयुक्ता वटिका ज्वरनाशिनी । ज्वरमष्टविधं हन्ति चिरकालसमुद्भवम् ॥ विविधं वारिदोषोत्थं नानादोषोद्भवं तथा । सततादिज्वरं हन्ति साध्यासाध्यमथापि वा ॥ क्षयोद्भवञ्च धातुस्थं कामशोकभवं

तथा। भूताविशज्वरञ्चैव कृत्तदोषभवं तथा। अभिघातज्वरं चैवमभिचारसमुद्भवम्॥ अभिन्यासं महाघोरं विषमञ्च त्रिदोषजम्॥ शीतपूर्व्वं दाहपूर्व्वं विषमं शीतलं ज्वरम्। प्रलेपकज्वरं घोरमर्द्धनारीश्वरं तथा॥ प्लीहज्वरं तथा कासं चतुर्थकविपर्य्ययम्। पाण्डुरोगगणान् सर्व्वानग्निमान्द्यमहागदान्॥ एतान् सर्व्वान् निहन्त्याशु पक्षार्द्धेन न संशयः। शाल्यन्नं तक्रसहितं भोजयेद् द्विजसंयुतम्॥ ककारपूर्व्वकं सर्व्वं वर्ज्जनीयं विशेषतः। मैथुनं वर्ज्जयेत् तावद यावन् न वलवान् भवेत्। पूर्णानन्दरसो नाम्ना दुर्लभो वसुधातले।

*Purna'nada rasa.*

One tola', each, of mercury, sulphur, copper, mica, copper pyrites, gold, silver, and orpiment; and four tola's of lodestone are to be subjected to bha'vana' with each of the following, in succession:—juice of leaves of ka'rabella, decoction of dashamulam, decoction of parpata, decoction of triphala', decoction of guruchi juice of betel leaves juice of ka'ka'machi leaves, juice of leaves of nirgundi, juice of punarnava', and juice of ginger. Pills are then to be made, two ractis in weight each. This medicine cures, in a week, any kind of fever (except, of course, fever due to consumption). It also cures indigestion, anæmia, spleen, and cough. Accompaniment, old molasses and powdered pippali. Diet boiled sha'li rice, butter-milk, and fish.

## चिरसुन्दर रसः।

भागत्रयं स्वर्णभस्म द्विभागं तारमभ्रकम्। लौहात् पञ्च प्रवालञ्च

मौक्तिकं त्रयसम्मितम्॥ भस्मसूतं सप्तकञ्च सर्व्वं मर्द्दयं तु कन्यया। छायाशुष्का वटी कार्य्या छागीदुग्धानुपानतः॥ क्षयं हन्ति तथा कासं गुल्मञ्चापि प्रमेहनुत्। जीर्णज्वरहरश्चायमुन्मादस्य निकृन्तनः॥ सर्व्वरोगहरश्चापि वारिदोषनिवारणः। एष वैद्ययशःप्रदः रसोऽयं चिरसुन्दरः॥

## *Chira-sundara rasa.*

Three parts of gold, two parts of silver and mica, each, five parts of iron, three parts of coral, three parts of pearls, and seven parts of incinerated mercury are to be rubbed with the juice of kanya', and made into pills, one racti in weight, each, to be dried in a shady place. Accompaniment, goat's milk. It cures consumption, cough, gulma, spermatorrhœa, insanity, and jeerna jwara.

## हिमांशुशेखर रसः।

शुद्धसूतं तथा गन्धं कारयेत् कज्जलीं शुभाम्। मृतसूतं हेम तारं लौहमभ्रञ्च ताम्रकम्॥ तालसत्त्वं वङ्गभस्म मौक्तिकं च प्रवालकम्। सुवर्णमाक्षिकञ्चापि चूर्णयित्वा विभावयेत्॥ निर्गुण्डी नागवल्ली च काकमाची च पर्पटी। त्रिफला कारवेल्लञ्च दशमूली पुनर्नवा॥ गुड़ूची वृषकश्चापि भृङ्गश्च केशराजकः। एतेषाञ्च रसेनैव भावयेत् त्रिदिनं पृथक्॥ गुञ्जामाना वटी कार्य्या हिमांशु शेखरो रसः। पिप्पलीगुड़संयुक्तां लिह्याच्च वटिकां शुभाम्॥ ज्वरमष्टविधं हन्ति निरामं साममेव च। सप्तधातुगतञ्चापि नाना दोषोद्भवं तथा॥ सततादिज्वरं हन्ति साध्यासाध्यमथापि वा। अभिघाताभिचारोत्थं जीर्णज्वरं विशेषतः॥

### *Hima'ngshu-shekhara rasa.*

Equal quantities of kajjali (black sulphuret of mercury, containing equal quantities of mercury and sulphur, rubbed together), incinerated mercury, gold silver iron, mica, copper, essence of orpiment (or, arsnic, duly purified in the same way as orpiment), tin, pearls coral, and copper pyrites are to be mixed together and subjected to bha'vana', for three times each, with the juice or decoction of each of the following, in succession :—leaves of nirgundi betel leaves ka'kama'chi, parpata, triphala', leaves of ka'rabella, dashamulam, punarnava', guruchi, roots of va'saka bhringara'ja, and keshara'ja. Pills are then to be made, one racti in weight, each. Accompaniment powdered pippali with old molasses It cures all sorts of fevers.

### मृतजीवन रसः ।

कुष्माण्डचूर्णतिलजैः प्रविशुद्धतालं गाढ़ं विमर्द्द्य सुषवीसलिलेन तुल्यम् । सूतेन हिङ्गुलभुवा सिकताख्ययन्त्रे गोलं विधाय परिहृत्तकपालमध्ये ॥ पत्रेण तं दिनपतेरपिधाय रुद्धा सन्धिं तयोर्गुड़सुधाखटिकाशिवाभिः । वह्नौ पचेन् मृदुनि चात्र शिरःस्थशालिवैवर्ण्यमात्रमवधिं प्रविधाय धीमान् ॥ वल्लं ततः सुरसमिश्रममुष्य दद्यात् सर्पिः सिताकणपयोमधु चानुपेयम् ॥ जेतुं ज्वरान् प्रविषमानिह वाञ्छिशान्त्यै मौलौ सुशीतलजलस्य ददीत धाराम् ॥ अथामयान्तं रसराजमौलीभूषामणिं तं मृतजीवनाख्यम् । सुधारसेनैव रसेन येन संजीवनं स्यात् सहसातुराणाम् ।

*Mritajivana rasa.*

Equal quantities of orpiment and mercury are to be rubbed well with the juice of black jeera' to form a lump, which is to be wrapped up with the leaves of arka. and confined within two earthen basins the joint of which is to be cemented by means of a paste prepared with powdered molasses, lime, chalk, and haritaki. The samputam thus prepared, is to be heated by means of the third kind of ba'luka' jantram. till paddy seeds kept upon the jantram become discoloured. When cooled by radiation of heat. the medicine is to be taken out, and used in doses of three ractis, each. to be taken with the juice of tulasi leaves Clarified butter, sugar, powdered pippali milk and honey are to be taken by the patient. a little after he takes the medicine. It cures all sorts of visama jwara. Cold water, in torrents, is to be poured upon the head of the patient, if he vomits after taking the medicine.

पञ्चानन रसः ।

शम्भुस्तद्गलभूषणं समरिचं दैत्येन्द्ररक्तं रविः पञ्चौ सागरलोचनं शशियुगं भागोऽर्कसंख्यान्वितः । खल्ले तत् परिमर्द्दितं रविजलै गुञ्जैकमात्रं ददेत् । सिंहोऽयं ज्वरदन्तिदर्पदलनः पञ्चाननाख्यो रसः ॥ पथ्यं च देयं दधिभक्तकञ्च सिन्धूत्थपथ्या मधुना समेतम् । गन्धानुलेपो हिमतोयपानं दुग्धञ्च देयं शुभदाड़िमञ्च ॥

*Pancha'nana rasa.*

Equal quantities of mercury, aconite, maricha, vaikra'nta

(garnet), copper, copper pyrites, iron pyrites, sulphur, orpiment, realgar, silver, and tin are to be rubbed together with the juice of roots of arka and made into pills, one racti in weight, each. It is a very good medicine of fever. Diet, boiled rice with curd, rock-salt, haritaki, and honey. The following are slso salutary to the ptient :—smearing the body with perfumed sandal paste, and drinking of cold water, milk, and juice of sweet pomegranates.

## सदाशिव रसः ।

पारदं रसकं तालं तुत्थं टंगणगन्धकं । सर्व्वमेतत् समं शुद्धं कारवेल्या रसैर्दिनम् ॥ मर्द्दयेत्तेन कल्केन ताम्रपात्रोदरं लिपेत् । अंगुलार्द्धार्द्धमानेन तत् पचेत् सिकताह्वये ॥ यन्त्रे यावत् स्फुटन्त्येव व्रीहयस्तस्य पृष्ठतः । ताम्रपात्रं समुद्धृत्य चूर्णयेन्मरिचैः समम् ॥ सदाशिवरसो नाम द्विगुञ्जं वातिकज्वरे । दातव्यं पर्णखण्डेन मुहूर्त्तान्नाशयेज्ज्वरम् ॥ त्रिदिनं विषमं तीव्रमेकद्वित्रि-चतुर्थकम् ॥

### *Sada'shiva rasa.*

One tola' in weight, each, of mercury, calamine, orpiment, copper sulphate, borax, and sulphur is to be rubbed with the juice of the leaves of ka'rabella, and made into a paste with which is to be smeared, one fourth of an anguli thick, the inner surface of a pot, made of six tola's in weight of copper only. The pot is then to be placed upside down, upon an earthen basin another basin of the same kind being placed upon the pot. The joint of the two basins is

to be cemented by mud, etc. The samputam, thus prepared, is to be heated by means of the third kind of ba'luka' jantram, till the paddy seeds kept upon the jantram burst. When cold, the medicine is to be taken out powdered, and mixed with an equal quantity of powdered black-pepper. Dose, two ractis each to be taken with honey and juice of betel leaves. This medicine cures, in a short time, fever due to an excess of va'yu. It cures, in three days, all sorts of visama jwara, including aika'hika, dya'hika, trya'hika, and chaturthaka fevers.

## चतुर्थकनिवारण रसः।

त्रिभागं तालकं विन्द्यादेकभागं तु पारदम्। तदर्द्धं गन्धकं चैव तदर्द्धं तु मनःशिला॥ कारवल्लीदलरसै र्मर्दयेद् प्रहरत्रयम्। पाचितो वालुकायन्त्रे चतुर्थकनिवारणः॥

*Chaturthaka niba'rana rasa*

Three parts of orpiment, one part of mercury, half a part of sulphur, and half a part of realgar are to be rubbed together with the juice of leaves of ka'rabella, and heated, for nine hours, by means of the third kind of ba'luka' jantram, till the paddy seeds kept upon the jantram burst. When cooled, the medicine is to be taken out, powdered, (and used in doses of one racti, each). This medicine cures chaturthaka fever.

## चतुर्थकगजाङ्कुशः।

स्याद्रसेन समायुक्तो गन्धकः सुमनोहरः। छिमावल्लीत्रिगुणितो

निर्गुण्डीरसमर्द्दितः ॥ सप्त वारानि तद्‌योज्यमार्द्रकस्वरसेन तु । मन्ततादिज्वरं हन्याच्चतुर्थकगजाङ्कुशः ॥

*Chaturthaka gaja'nkusha rasa.*

One part, each, of mercury, sulphur, and three parts of hima'balli (swarnakhiri) are to be rubbed together, for seven times, with the juice of the leaves of nirgundi. This medicine, taken in proper doses, with the accompamtment of honey and ginger juice, cures all sorts of visama jwara, including chaturthaka fever.

भूतभावन रसः ।

कण्टकारी सिन्धुवारस्तथा पूतिकरञ्जकम् । एतेषां रसमादाय धृत्वा खर्परखण्डके ॥ प्रक्षेप्यं गन्धकं तत्र ज्वालं मृद्वग्निना ददेत् ॥ गन्धके स्वे हतापन्ने तत्समं पारदं क्षिपेत् । मिश्रीकृत्य ततो द्वाभ्यां द्रुतं तमवतारयेत् । आमर्द्दयेत् तथा तत् तु यथा स्यात् कज्जलप्रभम् ॥ ततस्तु रक्तिकामस्य माषकं जीरकस्य च । माषकं लवणस्यापि पर्णे धृत्वा निषेवयेत् ॥ ज्वरे त्रिदोषजे घोरे जलमुष्णं पिवेदनु । छर्द्यां शर्करया दद्यात् सामे दद्यात् तथा गुड़म् । क्षये च्छागभवं चीरं प्रदद्यादनुपानकम् । रक्तातीसारे कूटजमूलवल्कलजं रसम् । रक्तवान्तौ तथा दद्यादुड़ुम्बरभवं जलम् । सर्व्वव्याधिहर श्चैष भूतभावननामकः । आयुर्वृद्धिकरत्येव मृतश्चापि प्रबोधयेत् ॥

*Bhuta Bha'bana rasa*

Juices of kantaka'ri, nirgundi, and putikaranja are to

be kept in an earthen pot which is to be subjected to a mild heat, powdered sulphur being thrown upon the juice, while so heated. When the sulphur melts, an equal quantity of mercury is to be thrown upon it. When both mixed together, the pot is quickly to be removed from the oven, and the mercury and sulphur rubbed to form a black powder. One racti of this black powder, mixed with six ractis of powdered jeera' and six ractis of rock salt, is to be taken with a betel leaf. A little after taking this medicine, the patient is to drink the following:– hot water in sa'nnipa'tika fever, sugar dissolved with water in vomiting, old molasses in mucus, goat's milk in consumption, decoction of the roots of kutaja in diarrhoea attended with bleeding, and the juice of urumbara in vomiting of blood. This medicine is a curer of all the diseases, and is an increaser of longevity. It revives consciousness even at the last stage of the disease.

## शीतघ्न रसः।

कुष्माण्डक्षारचूर्णोदकतिलजपृथक्पाचितं शुद्धतालं तुल्यं सूतेन पिष्ट्वा त्रिदिवसमसकृत् कारवेल्लद्रवेण। क्षिप्त्वा तत् खर्परान्त र्दिन पतिपिहितं रन्ध्रमप्यन्धयेत् तं नीरन्ध्रं चूर्णपथ्यागुड़लवणखटीमृद्भिरप्यन्तरालम्॥ तद् वालुकापूर्णघटे विदध्यात्क्रमैः पचेत् तावदुपर्य्यमुस्य। व्रीहिर्विवर्णत्वमुपैति यावत ततस्तु शीतं विदधीत चूर्णम्॥ सिद्धं तच्च समाददीत तुलसीतोयेन वल्लोन्मितं पश्चात् क्षौद्रकणासिताज्यपयसा कृत्वानुपानं गदी। भुञ्जीताथ पयोऽन्नमुद्ग-सहितं साज्यञ्च हन्यान्नृणां तापं कालवशेन सञ्चितमयं शीतघ्ननामा रसः॥

## *Shitaghna rasa.*

Orpiment is first of all to be purified by being boiled with an alkali prepared from kusma'nda, lime water, and sesamum oil, in succession. It is then to be mixed with an equal quantity of mercury and rubbed for three days with the juice of the leaves of ka'rabella, and made into a lump, which is to be completely wrapped up by means of a copper leaf. This is then to be confined within two earthen basins, the joint of which is to be cemented by means of a paste prepared from powdered haritaki, molasses, salt, chalk, and mud, mixed together. When dried, the samputam is to be heated by means of the third kind of ba'luka' jantram, so long as paddy seeds placed upon the jantrám do not burst. When cooled by radiation of heat, the medicine is to be taken out, and powdered. Dose, three ractis each, to be taken with honey, juice of tulasi leaves, powdered pippali, sugar, clarified-butter, and a little of milk, all mixed together. Diet, milk boiled rice, soup of mudga grams, and clarified butter. This medicine cures fever.

## बृहज्ज्वरान्तक लौहम् ।

रसं गन्धं तोलकञ्च जातीकोषफले तथा। हेमभस्म तु पादैकं तोलार्द्धं रूप्यलौहकम् ॥ अभ्रं शिलाजतु चैव भृङ्गराजञ्च मुस्तकम् ॥ केशराजमपामार्गं लवङ्गञ्च फलत्रिकम् ॥ वराङ्गवल्कलञ्चैव पिप्पली-मूलमेव च। सैन्धवञ्च विड़ञ्चैव गुड़ूचीचूर्णमेव च ॥ कण्टकारी रसोनञ्च धन्याकं जीरकद्वयम्। चन्दनं देवकाष्ठञ्च दार्व्वीन्द्रयव-मेव च ॥ किराततिक्तकं वालं तोलकञ्च समाहरेत्। द्वितोलं

मरिचं देयं भावयेदार्द्रजै रसैः ॥ माषार्द्धं भक्षयेत् प्रातर्मधुना मधुरीकृतम् । ज्वरं नानाविधं हन्ति शुक्रस्थं चिरकालजम् ॥ साध्यासाध्यविचारोऽत्र नैव कार्य्यो भिषग्वरैः । अन्तर्धातुगतञ्चापि नाशयेन्नात्र संशयः ॥ भूतोत्थं श्रमजञ्चापि सन्निपातज्वरं तथा । असाध्यञ्च ज्वरं हन्ति यथा सूर्य्योदयस्तमः ॥ गरुड़ञ्च समालोक्य यथा सर्पः पलायते । तथैवास्य प्रसादेन ज्वरः शीघ्रं पलायते ॥ बलदं पुष्टिदञ्चैव कामलापाण्डुरोगनुत् ॥ वीर्य्यस्तम्भकरं चैव मन्दाग्निनाशनं परम् । सदा तु रमते नारीं न वीर्य्यं क्षयतां व्रजेत् । प्रमेहं विविधञ्चैव विविधां ग्रहणीं तथा ॥ अनुपानविशेषेण सर्व्वव्याधिं विनाशयेत् ॥

*Brihat jwara'ntaka lauham.*

One tola' in weight, each, of mercury, sulphur, ja'tikosa, and ja'tiphala ; one fourth tola' of gold, half a tola' of iron and silver, each ; one tola' each of mica, bitumen, bhringara'ja, musta', keshara'ja, apa'ma'rga, lavanga, triphala, cardamom, roots of pippali, rock salt, bira-salt, sugar-like essence of guruchi, kantaka'ri, garlic,dhanya', jeera', black-jeera', red sandal wood, devada'ru, da'ruharidra', roots of kutaja, kira'ta-tikta, and ba'la ; and two tola's of maricha are to be rubbed together with ginger juice, and made into pills three ractis in weight, each. This medicine is to be taken in the morning with honey . It cures all sorts of fevers, jaundice, anaemia, spermatorrhœa, chronic diarrhœa, etc. It is a good aphrodisiac.

## विक्रमकेशरी रसः ।

शुल्वमेकं द्विधा तारं मर्द्दयेद् विधिवद् भिषक् ॥ पश्चाद् विषं

रसं गन्धं मेलयित्वा तु भावयेत्। एकविंशतिवारांश्च निम्बाक वल्कलद्रवैः॥ रसः सिद्धः प्रदातव्यो गुञ्जामात्रो ज्वरान्तकृत्। सर्व्वज्वरहरः ख्यातो रसो विक्रमकेशरी॥

*Bikrama keshari rasa.*

One part of copper, two parts of silver, and one part each of aconite, mercury, and sulphur are to be rubbed together, and subjected to bha'vana', for twenty one times, with the juice of the bark of the roots of a lime tree. Pills are then to be made, one racti, in weight, each. This medicine cures all sorts of fevers.

मेघनाद रसः।

तारं कांस्यं सूतं ताम्रमेभिस्तुल्यञ्च गन्धकम्। क्वाथेन मेघनादस्य पिष्ट्वा रुद्ध्वा पुटे पचेत्॥ षड्‌भिः पुटैर्भवेत् सिद्धो मेघनादो ज्वरापहः। भक्षयेत् पर्णखण्डेन विषमज्वरनाशनः॥ अस्य मात्रा द्विगुञ्जा स्यात् पथ्यं दुग्धौदनं हितम्। नागरातिविषामुस्त-भूनिम्बामृतवत्सकम्॥ सर्व्वज्वरातिसारघ्नं क्वाथमस्यानुपाययेत्। तरुणं वा ज्वरं जीर्णं तृष्णां दाहञ्च नाशयेत्॥

*Meghana'da rasa.*

Equal quantities of silver, bell-metal, mercury, and copper; and sulphur, equal in quantity to all of them, taken together, are to be rubbed with the juice of meghana'da, and heated by gajaputam. The rubbing and heating are to be performed

for six times. Dose, two ractis each, to be taken with a bit of betel leaf. This medicine cures visama jwara. Diet, boiled rice with milk. In fever attended with diarrhœa a decoction of the following is to be drunk after taking this medicine:—shunthi, ativisa', musta', kira'tatikta, guruchi, and kutaja—two tola's in all, to be boiled with thirty two tola's of water reducible to eight tola's. This medicine also cures navajwara, jeerana-jwara, thirst, and sensation of heat.

## चतुर्थकनिसूदन रसः।

रसगन्धकयोः कृत्वा कज्जलीं भाण्डमध्यगाम्। तत्राधोवदनां ताम्रपात्रीं संरुध्य शोषयेत्॥ पादाङ्गुष्ठप्रमाणेन चुल्यां ज्वालेन तां दहेत्। मासद्वयं ततस्तत्स्थां रसपात्रीं समाहरेत्। चूर्णयेद् रक्तिकाद्वयं त्रयं वा विचक्षणः। ताम्बूलीदलयोगेन दद्यात् सर्व्वज्वरेष्वमुम्॥ जीरसैन्धवसंलिप्तवक्त्राय ज्वरिणे हितम्। चतुर्थकादिकं ज्वरं विषमं च नवं तथा। साधारणं सन्निपातं जयत्येष न संशयः॥

*Chaturthaka nisudana rasa.*

Equal quantities of mercury and sulphur are to be rubbed together to form a kajjali or black powder, which is to be kept in an earthen pot. A copper pot is to be placed, upside down, upon the black powder. The mouth of the earthen pot is then to be closed by means of an earthen basin, the joint being cemented by means of rags, mixed with mud. When dried, the pot is to be placed upon an oven, and heated in such a way as the flames of the fire do not exceed the

height of the toe. The heating is to be performed for sixty days. The copper pot is then to be taken out and powdered. This powder, taken in doses of two or three ractis each, with honey and juice of betel leaves, cures all sorts of fevers including chaturthaka fever. The mouth of the patient is to be coated with a paste made of pestled jeera' and rock-salt, before he takes the medicine. This medicine is efficacious in sa'nnipa'tika fever also

## दिगम्बर रसः ।

वज्राभ्रं सिन्दूरं चैव जीरकञ्च विचूर्णितम् । ताम्रं कनकवीजं च सर्वं वासारसेन च ॥ कण्टकारीरसेनैव धात्रीमुस्तरसेन च । गुड़ूच्याः स्वरसेनैव भावयित्वा पृथक् पृथक् ॥ मर्दयित्वा वटी कार्य्या गुञ्जामात्रा प्रयोजिता । विषमाख्यान् ज्वरान् सर्वान् प्लीहानं यकृतं वमिम् । रक्तपित्तं वातरक्तं ग्रहणीं श्वासकासकौ । अरुचिं शूलहृल्लासावर्शांसि च विनाशयेत् ॥ रसो दिगम्बराख्योऽयं वृष्य श्चातिवलप्रदः ॥ महेशप्रियपुत्रेण भूदेवेन विकल्पितः ॥

*Digambara rasa.*

Equal quantities of mica rasasindura, powderd jeera', copper, and seeds of dhutura are to be mixed together and subjected to bha'vana' with the juice of each of the following, in succession :—leaves of ba'saka, kantaka'ri leaves a malaki, musta and guruchi. The compound is then to be rubbed with water and made into pills, one racti in weight, each. This medicine cures all sorts of visama jwara, enlargement of spleen and liver, vomiting, hemeptosis, va'tarakta, chronic

diarrhœa, asthma, cough, aversion to food, colic hiccough, and piles.

## उमाप्रसादन रसः।

मेघपारदवैगन्धविषव्योषपटूनि च। जीरकद्वयमेतानि समभागानि कारयेत्॥ सिन्दुवाररसेनापि रसोनस्य रसेन च। अपामार्गरसेनापि सप्तवारं विमर्द्दयेत्॥ तत् पक्वं वालुकायन्त्रे गुञ्जामात्रं प्रयोजयेत्। सनागवल्लीमरिचं ततः शीताम्बु पाययेत्। उमाप्रसादनो नाम रसः शीतज्वरापहः। चतुर्थकं त्र्याह्निकं वा नाशयेत् किमुतापरान्॥

## *Uma'prasa'dana rasa*

Equal quantities of mica, mercury, sulphur, aconite, trikatu, rock salt, jeera', and black jeera' are to be rubbed together, for seven days with juices of nirgundi, garlic, and apa'ma'rga. The compound is then to be put inside an earthen putam and heated by means of the third kind of the ba'luka' jantram. This medicine, in doses of one racti each, taken with honey, juice of betel leaves, and powdered maricha, cures fever with the sensation of cold. A little of cold water is to be drunk, after taking the medicine. It also cures such obstinate fevers as trya'hika and chaturthaka, not to speak of the other kinds of fevers.

## ज्वराङ्कुश रसः।

टङ्कनं रसगन्धौ च समभागौ प्रकल्पयेत्। नेपालं द्विगुणं

दत्त्वा मर्द्दयेत् खल्वमध्यतः॥ श्लक्ष्णतां याति तद् यावत् तावत् तन् मर्द्दयेच् छनैः। सैन्धवं मरिचं शङ्खं चिञ्चाक्षारं च माक्षिकम्॥ तुल्यमेतत् त्रयं कृत्वा निम्बुतोयेन मर्द्दयेत्। वटकान् चणतुल्यांस्तु भक्षयेच्च दिनत्रयम्॥ ऐकाह्निकं चतुर्थकं द्व्याह्निकं त्र्याह्निकं तथा। सर्व्वज्वरं विनाशयेज् ज्वराङ्कुशाह्वयो रसः॥

*Jwara'nkusha rasa.*

One part of borax, one part of mercury and sulphur combined, and two parts of copper are to be rubbed well to form a very fine powder, with which is to be mixed two fifth parts, each, of the following :—rock-salt, maricha, conch-shell, alkali prepared from bark of tamarind, and copper pyrites, These are then to be rubbed together with lime juice, and made into pills, two ractis in weight, each. This medicine, taken with suitable accompaniments, cures in three days all sorts of fevers including such visama jwaras as aika'hika, dwya'hika, trya'hika, and chaturthaka fevrs.

चन्द्रोदय रसः।

रसगन्धौ तथा वङ्गमभ्रकं समभागतः। मेलयित्वाऽथ वङ्गेन समं सूतं विमर्द्दयेत्॥ तत्रैकीकृत्य गन्धाभ्रे पेष्य जम्बीरवारिणा। सामान्यं पुटमादद्यात् सप्तधा साधितं रसम्। कुमार्य्या चित्रकेणापि भावयित्वाऽथ सप्तधा। गुडेन जीरकेनापि ज्वरे जीर्णे प्रयोजयेत्॥ कासे श्वासे कुमार्य्या च त्रिफलाक्काथयोगतः। उन्मादं च धनुर्व्वातममृताक्काथयोगतः। इत्येवं रोगतापघ्नो रसश्चन्द्रोदयाह्वयः॥

### *Chandrodaya rasa.*

Equal quantities of mercury, sulphur, tin, and mica, are to be mixed together ( by rubbing mercury, first of all, with the tin and then with sulphur, and last of all with mica ) and rubbed with lime juice, and heated by laghu putam. This rubbing and heating is to bo performed for seven times. The compound is then to be subjected to bha'vana' with the juice of kanya', for seven times, and heated each time, as before. It is next to be subjected to bha'vana', for seven times, with the decoction of roots of chitraka and heated each time, as before. Accompaniments, molasses with powdered jeera' in jeerna jwara ; juice of kanya' with honey in asthma and cough ; decoction of triphala' with honey in insanity ; and decoction of guruchi with honey in titanus.

### पर्पटी प्रयोगः ।

सर्व्वेश्वरवज्रविजयरसरसेन्द्रजीवेन्द्रादिपर्पटीसंज्ञका रसभैषज्याः सर्व्वज्वरेषु प्रयुज्यन्ते । तेषां निर्म्माणप्रणाली अग्रे ग्रहणीरोगाधिकारे द्रष्टव्या ॥

### *Application of parpati.*

There is a class of medicine, called 'parpati". The mode of their preparation and application will be given in details in the chapter containing the treatment of chronic diarrhœa. Of these medicines, those named sarveshwara, bajra. bijaya, rasa, rasendra, sutendra, jeevendra, etc. are the principal ones. These, if properly applied, cure all sorts of fevers.

---

तृतीयोऽध्यायः ।

# अथ ज्वरातिसाराधिकारः ।

## अथ ज्वरातिसार-निदानम् ।

—:o:—

# CHAPTER III.

# Jwaratisara' fever with diarrhœa.

### *Symptoms of the disease.*

**पित्तज्वरे पित्तभवोऽतिसार स्तथातिसारे यदि वा ज्वरः स्यात् । दोषस्य दूष्यस्य समानभावाज्ज्वरातिसारः कथितो भिषग्भिः ॥**

Sometimes, fever, due to an excess of pittam, is attended with diarrhoea due to the same cause. Diarrhoea also is sometimes attended with fever. Such a combination of fever and diarrhoea is called "jwara'tisa'ra—"

**ज्वरातीसारिणामादौ कुर्य्याल्लङ्घनपाचने । प्रायस्तावामसम्बन्धं विना न भवतो यतः ॥**

One suffering from jwara'tisa'ra should, first of all, be made to fast and to take such medicines as can digest the undigested chyle, which is invariably a partial cause of both fever and diarrhoea. Fasting and digesting medicines do away with the undigested chyle, and help to pacify the diseases.

## ज्वरातिसारे रसप्रयोगः ।

### सुखसञ्जीवनी रसः ।

मागधी वत्सनाभश्च तयोस्तुल्यञ्च हिङ्गुलम् । सुखसञ्जीवनी ख्याता जम्बीररसमर्द्दिता ॥ मूलकवीजसंतुल्या वटिका सुखदायिनी । पानीया शीततोयेन ज्वरातीसारनाशिनी । विसूच्यां सन्निपाते च ज्वरे चैवातिदुस्तरे ॥

## *Iatro-chemical medicines applicable in jwara'tisa'ra.*

### *Sukha sanjibani rasa.*

One part each of pippali and aconite and two parts of cinnber are to be rubbed together with the juice of lime fruit, and made into pills of the size of a seed of raddish. This is to be taken with cold water. It cures fever with diarrhœa It may also be applied in cholera and sa'nnipa'tika fever, however malignant.

### सिद्धप्राणेश्वर रसः ।

गन्धं शाभ्रं पृथग् वेदभागमन्यच्च भागिकम् । सर्ज्जिटङ्गयवक्षाराः पञ्चैव लवणानि च ॥ वराव्योषेन्द्रवीजानि हिजीराग्नियमानिकाः । सहिङ्गु वीजसारञ्च शतपुष्पा सुचूर्णिता ॥ सिद्धप्राणेश्वरः सूतः प्राणिनां प्राणदायकः । माषैकं भक्षयेदस्य नागवल्लीदलैर्युतम् ॥ उष्णोदकानुपानञ्च दद्यात् तत्र पलत्रयम् । अतिसारे ज्वरान्विते केवले वा ज्वरेऽपि च ॥ घोरे त्रिदोषजे रोगे ग्रहण्यामसृगामये । वातोदरोद्भवे शूले शूले च परिणामजे ॥

*Siddha pra'neshwara rasa.*

Four parts. each, of sulphur mercury, and mica, and one part, each, of sarjiksa'ra, borax, javaksa'ra, the five salts, triphala', trikatu, indrajaba jeera', black jeera', roots of chitraka, jama'ni, hingu, biranga, and shatapuspa' are to be rubbed together ( with water ), and made into pills, six ractis in weight each. Accompaniment, juice of betel leaves. Twelve tola's of hot water is to be drunk after taking the medicine. It cures diarrhœa, with or without fever, chronic diarrhœa dysentery, and colic due to flatulence, and acidity.

कनकसुन्दर रसः ।

हिङ्गुलं मरिचं गन्धं पिप्पली टङ्गणं विषम् । कनकस्य च वीजानि समांशं विजयाद्रवैः ॥ मर्द्दयेद् याममात्रन्तु चणमात्रां वटीं चरेत् । भक्षणाद् ग्रहणीं हन्ति रसः कनकसुन्दरः ॥ अग्निमान्द्यं ज्वरं तीव्रमतिसारञ्च नाशयेत् । पथ्यं दध्योदनं दद्याद् यद्वा तक्रान्नमण्डकम् ॥

*Kanaka sundara rasa.*

Equal quantities of cinnabar, maricha, sulphur, pippali, borax, aconite, and seeds of dhustura are to be rubbed for three hours, with the water in which bhanga' has been kept immersed for some time. Pills are then to be made, two ractis in weight each. This medicine cures loss of appetite, fever, and malignant diarrhœa. Diet, curd or butter-milk with paste prepared from boiled rice.

### कनकप्रभा रसः ।

सुवर्णवीजं मरिचं मरालपादं कणाटङ्गनसूतनीलम् । गन्धं जयाङ्घ्रिद्रवमं विमर्द्य गुञ्जाप्रमाणां वटिकां विदध्यात् ॥ एषाति सारग्रहणीं ज्वराग्निमान्द्यं निहन्यात् कनकप्रभेयम् । दध्योदनं पथ्यमनुष्णवारि मांसं भजेत् तित्तिरिलावकानाम् ।

### *Kanaka prabha´ rasa.*

Equal quantities of seeds of dhutura', maricha, hangsapa'di, pippali, borax mercury, aconite and sulphur are to be rubbed, for one day, with the water in which leaves of bhanga' have been kept immersed for some time, and made into pills, one racti in weight each. This medicine cures diarrhœa, acute or chronic, with or without fever, and loss of appetite. Diet, curd with boiled rice, cold water, and juice of meat of such birds as la'ba ( a sort of quail ) and tittiri ( francoline partridge ).

### गगनसुन्दर रसः ।

टङ्गनं दरदं गन्धमभ्रकञ्च समं समम् । दुग्धिकाया रसेनैव भावयेच्च दिनत्रयम् । द्विगुञ्जं मधुना देयं वल्लेन श्वेतसर्ज्जसः ॥ विविधं नाशयेद्रक्तं ज्वरातीसारमुल्वणम् । पथ्यं तक्रं पयश्छाग- मामशूलं विनाशयेत् । अग्निवृद्धिकरो ह्येष रसो गगनसुन्दरः ।

### *Gagana sundara rasa.*

Equal quantities of borax, cinnabar, sulphur, and mica

are to be mixed together, and subjected to bha'vana', for three days, with the juice of dugdhika'. Pills are then to be made, two ractis in weight, each. Accompaniment. three ractis of white resin and a little of honey. This medicine cures all sorts of fevers with diarrhœa and dysentery, and colic due to mucus. It increases power of digestion. Diet, butter-milk, goat's milk (duly boiled and cooled).

## प्रेतसञ्जीवन रसः।

रसगन्धौ समौ ग्राह्यौ सूतपादं विषं क्षिपेत्। सर्व्वतुल्यं मृतश्चाभ्रं मर्द्यं धुस्तुरजैर्द्रवैः। सर्पाक्ष्याश्च द्रवैर्यामं कषायेनाथ भावयेत्। धातक्यतिविषा मुस्तं शुण्ठी जीरकवालकम्॥ यमानी धान्यकं विल्वपाठापथ्यकणान्वितम्। कूटजस्य त्वचं वीजं कपित्थं वालदाड़िमम्। प्रत्येकं कर्षमात्रं स्यात् कुट्टितं क्वाथयेज्जलैः। चतुर्गुणं जलं दत्वा यावत् पादावशेषितम्॥ अनेन त्रिदिनं भाव्यः पूर्वोक्तो मर्द्दितो रसः। रुद्धा तद् वालुकायन्त्रे क्षणं मृदग्निना पचेत्॥ प्रेतसञ्जीवनो नाम चास्य गुञ्जचतुष्टयम्। दातव्यमनुपानेन चासाध्यमपि साधयेत्॥ षट्-प्रकारमतीसारं साध्यासाध्यं जयेद् ध्रुवम्। नागरातिविषामुस्तं देवदारु कणा वचा॥ यमानी वालकं धन्या कूटजत्वक्हरीतकी। धातकीन्द्रयवौ विल्वं पाठा मोचरसं समम्। चूर्णितं मधुना लेह्यमनुपानं सुखावहम्॥

*Preta sanjibana rasa*

One part of mercury and sulphur, each, one fourth part of aconite, and mica, equal in quantity to all of

them are to be rubbed together with the juices of leaves of dhutura' and sarpa'ksi, for three hours. The compound is then to be subjected to bha'vana', for three days, with the decoction of the following :—dha'taki flowers, ativisa', musta', shunthi, jeera', ba'la', jama'ni, dhanya', dried green bilwa fruits, pa'tha', haritaki, pippali, bark of kutaja, seeds of kutaja, kapittha fruit, and green pomegranate, each of these being two tola's in weight cut into pieces, and boiled with hundred and twenty tola's of water, reducible to thirty two tola's. After the compound is thus subjected to bha'vana' and dried, it is to be confined in an earthen pot covered with an earthen basin the joint being cemented as usual, with rags and mud. The pot is then to be heated by the third kind of ba'luka' jantram. Dose, four ractis each. Four ractis in weight of the powder of the following ingredients, combined in equal quantities, are to be licked with a little of honey, after the medicine is taken. This medicine cures all sorts of diarrhœa.

## ज्वरातिसारे पथ्यानि।

अतिसारे ज्वरे चैव पथ्यं यद् यद् विधीयते। ज्वरातिसार-रोगेऽपि तेषां युक्तं प्रदीयते॥

### *Diet in fever with diarrhœa.*

Some items of diet prescribed separately in fever and diarrhœa may be selected, having regard to the condition of the disease.

## अथातिसाराधिकारः ।

## अथातीसार-निदानम् ।

गुर्व्वतिस्निग्धरूक्षोष्ण-द्रवस्थूलातिशीतलैः । विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः ॥ स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः । शोकाद्दुष्टाम्बुमद्यातिपानैः सात्म्यर्त्तुपर्य्ययैः ॥ जलाभिरमणैर्वेगविघातैः क्रिमिदोषतः । नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते । संशम्यापां धातुरग्निं प्रवृद्धः शकृन्मिश्रो वायुनाधः प्रणुन्नः । सरत्यतीवातिसारं तमाहु व्याधिं घोरं षड्विधं तं वदन्ति ॥

*Diarrhœa.*

*Its causes.*

The following are the causes of diarrhœa:—taking of food-stuff which are heavy, too much fatty, too much coarse, much hot, mainly liquid, ill-chewed. or too much cold, incogenial by combination ; taking of food before the previous meal is digested, taking of food not well cooked ; taking of food at irregular hours and in excessive quantities ; excessive or wrong use of oil, etc. for purpose of applying douches purgatives, and vomiting ; taking of organic poison, panic, grief, much drinking of impure water, and taking of unaccustomed food, having recourse to new practices, unusual reverse of weather, excessive bath or excess of sports in water, suppressing calls of nature, and activites of worms in the intestines.

The disease is called atisa'ra ( diarrhœa ). simply because it literally means an excessive discharge. What

actually happens in this disease is this ; the watery portion of the polluted dha'tus (such constituents of the body as chyle) lessens the intensity of the digesting fire ( heat in the stomach), is mixed with the stool, and is driven down by va'yu in excessive quantities.

## अतिसारे रसप्रयोगः।

### अभयनृसिंह रसः।

दरदञ्च विषं व्योषंजीरकं टङ्गनं समम्। गन्धकञ्चाभ्रकञ्चैव भागैकं शुद्धसूतकम्॥ सर्व्वतुल्यमहिःफेनं मर्द्दयेत् निम्बुकद्रवैः। एकैकं भक्षयेच्चानु जीरकमधुना सह॥ त्रिदोषोत्थमतीसारं सज्वरं वाथ विज्वरम्। सर्वरूपमतीसारं संग्रहग्रहणीं जयेत्॥ रसोऽभयनृसिंहोऽयमतीसारे सुपूजितः॥

## *Iatro chemical medicines in diarrhœa.*

### *Abhaya nrisingha rasa.*

Equal quantities of cinnabar, aconite, trikatu, jeera', borax, sulphur, mica, and mercury are to be mixed together and rubbed with lemon juice. Pills are then to be made, one racti in weight, each, to be taken with honey and powder of fried jeera'. This medicine cures diarrhœa, due to an excess of the three doshas and chronic diarrhœa also.

### प्राणेश्वर रसः।

रसगन्धकमभ्रञ्च टङ्गणं शतपुष्पकम्। यमानी जीरकाख्यञ्च प्रत्येकं कर्षयुग्मकम्॥ कर्षमेकं यवक्षारं हिंगु पटुकपञ्चकम्।

विरङ्गेन्द्रयवं सर्ज्जरसकं चाग्निसंज्ञितम् । घृष्ट्वा च वटिका कार्य्या नाम्ना प्राणेश्वरो रसः ॥

*Praneshwara rasa.*

Two tola's, each, of mercury, sulphur, mica, borax, shatapuspa, jama'ni, and jeera'; and one tola' each of jabaksa'ra, hingu, the five salts, biranga, indrajava, resin, and roots of chitraka are to be rubbed well with water, and made into pills, two ractis in weight, each. This medicine cures diarrhœa.

अमृतार्णव रसः ।

हिंगुलोत्थो रसो लौहं गन्धकं टंकणं शठी । धान्यकं वालकं मुस्तं पाठा जीरं घुणप्रिया ॥ प्रत्येकं तोलकं चूर्णं छागीक्षीरेण पेषितम् । माषैका वटिका कार्य्या रसोऽयममृतार्णवः ॥ वटिकां भक्षयेत् प्रातर्गहनानन्दभाषिताम् । धन्याजीरकयूषेण विजया-शणवीजतः ॥ मधुना छागदुग्धेन मण्डेन शीतवारिणा । कदली-मोचकरसैः कञ्चटकद्रवेण वा । अतीसारं जयेदुग्रमेकजं द्वन्द्वजं तथा । दोषत्रयसमुद्भूतमुपसर्गसमन्वितम् ॥ शूलघ्नो वह्निजननो ग्रहण्यर्शोविकारनुत् । अम्लपित्तप्रशमनः कासघ्नो गुल्मनाशनः ॥

*Amrita'rnava rasa.*

One 'tola' each of mercury, sulphur, iron, borax, shathi, dhanya', ba'laka, musta' pa'tha', jeera' and ativisa' are to be

rubbed together with goat's milk, and made into pills, six ractis in weight, each. This medicine is to be taken in the morning with honey and any one of the following:—decoction of dhanya' and jeera', bhanga', powdered seeds of shana, goat's milk, paste prepared from boiled rice, cold water, juice of banana flower, and juice of kanchata grass. This medicine cures all sorts of diarrhœa, acute or chronic, colic, piles, amlapitta, cough, gulma, and loss of digestive power.

## दर्दुर रसः ।

सुश्लक्ष्णतीक्ष्णचूर्णं तु रसेन्द्रसमभागिकम् । काञ्चनाररसैर्घृष्टं सर्व्वातीसारनाशनम् ॥ पिष्टः समेन तीक्ष्णेन काञ्चनाराम्बुमर्द्दितः । पुटपाकोऽतिसारघ्नः सुतोऽयं दर्दूराह्वयः ॥

*Dardura rasa.*

Equal quantities of steel and mercury are to be rubbed with the juice of ka'nchana'ra. The compound may then be used as it is or may be heated by putam. (Dose two ractis, each, to be taken with honey only).

## आनन्दभैरव रसः ।

हिङ्गुलं वत्सनाभं च मरिचं टङ्कणं कणा । मर्द्दयेत् समभागं च रसो ह्यानन्दभैरवः ॥ गुञ्जैकां वार्द्धगुञ्जां वा वलं ज्ञात्वा प्रदापयेत् । मधुना लेहयेच्चानु कूटजस्य फलं त्वचम् ॥ चूर्णितं कर्षमात्रं तु त्रिदोषोत्थातिसारजित् । दध्यन्नं दापयेत् पथ्यं

गावाज्यं तक्रमेव वा ॥ पिपासायां जलं शीतं विजया च हिता निशि ॥

### *A'nanda bhairava rasa.*

Equal quantities of cinnabar, aconite maricha, borax, and pippali are to be rubbed together. Dose, half to one racti, each. One tola of the powder of the bark or seeds of kutaja is to be taken with honey, after taking this medicine. Diet, boiled rice with curd or butter milk. Cold water is to be drunk when the patient gets thirsty. It is desirable to take a little of bhanga' at night, while taking this medicine.

### सुधासार रसः ।

पृथक्पलिकगन्धाभ्रसूतसञ्जातकज्जलीम् । प्रद्राव्य निक्षिपेद् व्योम पलिकं गतचन्द्रिकम् ॥ काष्ठेनालोड्य तत् सर्व्वं क्षिपेत् कूटजपत्रके । पुनः संचूर्ण्य यत्नेन भावयेत्तदनन्तरम् ॥ वालतिन्दुफलद्रावैः क्षीरैरौदुम्बरैस्तथा । अरलुत्वग्रसैश्चापि दुग्धिनीस्वरसैस्तथा ॥ पुटपक्वस्य वालस्य दाड़िमस्य रसैः शुभैः । कृष्णकाम्बोजिकामूलरसैः कुटजवल्कलैः । तुल्यांशविश्वगान्धारीचूर्णं द्विपलिकं क्षिपेत् । मुस्तावत्सकदीप्याग्निमोचसारं सजीरकम् ॥ वत्सनाभं च कर्षांशं प्रत्येकं तत्र निक्षिपेत् । विचूर्ण्य भावयेद् पुनः शुण्ठीक्वाथेन सप्तधा ॥ इत्थं सिद्धो रसः पिष्टः करण्डे विनिवेशयेत् । सुधासार इति ख्यातः सुधारससमो गुणैः ॥

दीपनः पाचनो ग्राही हृद्यो रुचिकरस्तथा । दोषत्रयातिसारं

च दुर्ज्जयं भेषजान्तरैः ॥ आमं चैवामरक्तं च ज्वरातिसारमेव च । सातीसारां विसूचीं च प्रतिबध्नाति तत्क्षणात् ॥ मान्यमानव्यतिक्रान्तिरिव पुण्यफलोदयम् ॥ पिष्टविश्वाद्रकल्केन विधाय खलु चक्रिकाम् ॥ निक्षिपेत् स्वेदनीयन्त्रे पक्वार्द्धघटिकावधि । आकृष्य तज्जलैरेवं संप्रमर्द्य हरेद्रसम् ॥ सुधासाररसं तत्र क्षिप्त्वा धानकसम्मितम् । पूर्व्वोदितेषु रोगेषु प्रदद्दीत भिषग्वरः ॥ गोतक्रेनाजदध्ना वा पथ्यं देयं हितं मितं । बालरम्भाफलं गुर्व्वीफलं बिल्वफलं तथा ॥ मधुकमामपेशी च वृन्ताकं च प्रशस्यते । सर्व्वातिसारं ग्रहणीं च हिक्कां मन्दाग्निमानाहमरोचकं च ॥ निहन्ति सद्यो विहितमपाके द्विविप्रयोगेण रसोत्तमोऽयम् । ( षड्भिस्तु रत्तिकाभिः स्यान्माषको हेमधानकौ ) ॥

*Sudha'-sa'ra rasa.*

Four tola's, each, of mercury and sulphur, are to be rubbed together to form kajjali, or black powder, which is to be melted. Four tola's of mica are to be thrown upon this melted kajjali, the whole thing being rolled and rubbed by means of a wooden rod. While still in melted condition, it is to be thrown upon leaves of kutaja. The compound is then to be reduced to powder, and subjected to bha'vana' with each of the following :—juice of green tinduka fruits, milk of udumbara, juice of bark of a'ragbadha, juice of dugdhini, juice of green pomegranate fruit, mildly heated by putam, juice of the roots of black ka'mbojika' (gunja' or somara'ji), and juice of the bark of kutaja. The following is then to be mixed with it :—four tola's, each, of powdered shunthi, and kantaka'ri ; and

one tola', each, of musta', indrajava, black jeera', roots of chitraka, exudation of the sha'lmali tree, jeera', and aconite. The compound is next to be subjected to bha'vana', for seven times, with the decoction of shunthi. This medicine increases the digesting heat. It increases appetite. Dose, six ractis each, to be given with an extract of shunthi and musta', pestled together, made into a lump, and heated by means of the swedani jantram, for twelve minutes. Diet, butter milk prepared from cow's milk or curd prepared from goat's milk, mixed with other items of suitable food stuff, such as green bannana fruit, gurbi, green bilva fruit, green mangoe fruit, cut into piece and dried, honey, and egg fruit. This medicine, if appilied twice or thrice a day, cures, very quickly, all sorts of diarrhoea, acute or chronic, hicough, loss of power of digestion, intestinal obstruction, dysentery, diarrhœa with fever, cholera, diarrhœa with mucus, and aversion to food.

## नागसुन्दर रसः ।

नागभस्मरसव्योमगन्धै रद्वंपलोन्मितैः । कुर्वीत कज्जलीं श्लक्ष्णां प्रक्षिपेत् तदनन्तरम् । द्विपलोन्मितरालायां द्रुतायां परिमिश्रिताम् ॥ मृष्टैः यच्चाक्षसिन्धूत्थवचाव्योषद्विजीरकैः । सपथ्याविजयादीप्यैः सुस्थां- गैरवचूर्णितैः ॥ मेलयेत् प्राज्ञन् कल्कं भावयेत्तदनन्तरम् । महानिम्बत्वचासारैः काम्बोजीमूलजद्रवैः ॥ रसैर्नागवलायाश्च गुडूच्याश्च त्रिधा त्रिधा । ततश्च गुटिकाः कार्य्या वदरास्थिप्रमाणतः । हन्यादेव हि नागसुन्दररसो वल्लोन्मितः सेवितो । नानातीसरणामयं गुदपरिभ्रंशं तथा विम्विशम् ॥

## *Na'ga sundara rasa.*

Two tola's each of lead, mercury, mica, and sulphur are to be rubbed together and reduced to a very fine powder. Eight tola's of resin are to be melted and mixed with the powder, which is again to be mixed with one tola' in weight of the powder of each of the following:—bark of banian, bibhitaki, rock-salt, bacha', trikatu, jeera', black jeera', haritaki, bhanga', and jama'ni. The compound is then to be subjected to bha'vana' for three times each with the juices of the following:—bark of maha'nimba, roots of gunja', na'gabala', and guruchi. Pills are then to be made, two ractis in weight each. This medicine cures all sorts of diarrhoea dislocation of the rectum, and dysentery.

## सुधासिन्धु रसः ।

द्वौ भागौ गन्धकस्याष्टौ शङ्खचूर्णस्य योजयेत् । एकमेव रसस्यांशमर्कक्षीरेण मर्द्दयेत् । चित्रकस्य द्रवेणैव शोषयित्वा पुनः पुनः । एकीकृत्य रसेनाथ क्षारं दत्त्वा तदर्द्धकम् ॥ अर्कक्षीरेण कुर्वीत गोलकानथ शोषयेत् । निरुध्य चूर्णलिप्तेऽथ भाण्डे दद्यात् पुटं तथा । सुधासिन्धुरसो ह्येष संग्रहण्यतिसारनुत् । गुञ्जाचतुष्टयं चास्य मरीचाज्यसमन्वितम् । दद्यीत दधिभक्तं च पथ्यं विश्वनाथे तथा ।

## *Sudha' sindhu rasa.*

Two parts of sulphur, eight parts of conch-shell, and one part of mercury are to be rubbed together with

milk of arka. The compound is then to be subjected, for seven times, to bha'vana' with the decoction of the roots of chitraka. It is next to be mixed with half its quantity of ja'baksa'ra, rubbed with the milk of arka, made into lumps, and dried. These lumps are then to be put into an earthen pot, the inner sufarce of which has been smeared with lime. The mouth of the pot is then to be duly closed by an earthen basin, the joint being cemented by mud and rags. The pot is then to be subjected to heat by putam. This medicine cures diarrhœa, acute and chronic. Dose, four ractis, each, to be taken with powdered maricha and a little of clarified butter. Diet, boiled rice with curd.

### विश्वनाथ रसः ।

मृतपारदभागैकं चत्वारः शुद्धगन्धकात् । यामं च मर्द्दयेत् खल्वे तेन पूर्य्या वराटिकाः । टङ्कनं तु गवां चीरैः पिष्ट्वा तेन मुखं लिपेत् । वराटानां प्रयत्नेन रुद्ध्वा भाण्डे पुटे पचेत् । स्वाङ्गशीतं समुद्धृत्य ततश्चूर्णा वराटकाः । विश्वनाथरसो नाम्ना चौद्रैर्गुञ्जा-चतुष्टयम् ॥ नागरातिविषामुस्तादेवदारुवचान्वितम् । कषाय-मनुपानं स्याद्वातातीसारनाशनः ।

*Bishwanath rasa.*

one part of incinerated mercury, and four parts of sulphur are to be rubbed together, for three hours. The powder, so formed, is to be put inside as many cowri-shells as necessary. The upper part of the gaps in the shells is to be closed by means of a paste prepared by borax

pestled with cow's milk. These shells are then to be subjected to heat by putam. When cooled by radiation of heat, the cowries are to be taken out and powdered very fine. Dose, four ractis each, to be taken with honey. Decoction of shunthi, ativisa', musta', devada'ru and bacha', is to be drunk after taking this medicine which cures diarrhœa due to an excess of va'yu.

## गिरिश सुन्दर रसः ।

शुद्धसूतं समं गन्धं मरिचं टङ्कणं तथा । स्वर्णवीजं समं मर्द्यं भार्गीद्रावैर्दिनार्द्धकम् ॥ सूततुल्यं मृतं चाभ्रं रसः गिरिशसुन्दरः । अस्य गुञ्जाद्वयं हन्ति पित्तातिसारमुग्रकम् ॥

*Girisha sundara rasa.*

Equal quantities of mercury, sulphur, maricha, borax, and seeds of black dhutura' are to be rubbed with the juice of bha'rgi for six hours. The compound is then to be mixed with mica, equal in quantity to mercury. This medicine cures diarrhœa, even of a virulent type. Dose, two ractis, each.

## पुर्णचन्द्रोदय रसः ।

शुद्धं च तालकं लौहं गगनं च पलं पलम् । कर्पूरं पारदं गन्धं प्रत्येकं वटकोन्मितम् ॥ जातिकोषमुरापत्रं शठीतालिश केशरम् । व्योषं चोचं कणामूलं लवङ्गं पिचुसम्मितम् ॥ भक्षयेत् प्रातरुत्थाय गुञ्जाद्वयप्रमाणतः । नानारूपमतिसारं ग्रहणीं

सर्व्वरूपिणीम् ॥ अम्लपित्तं तथा शूलं शूलञ्च परिणामजम् । रसायनवरश्चायं वाजीकरण उत्तमः ॥

*Purna chandrodaya rasa.*

Four tola's, each, in weight of orpiment, iron, and mica, and one tola', each, of camphor, mercury, sulphur, ja'tikosa, mura'ma'ngsi, tejapatra, shathi, ta'lishapatra, na'ga-keshara, trikatu, cardamom, roots of pippali, and cloves are to be rubbed together, and taken early in the morning, in doses of two ractis a day. It cures all sorts of diarrhoea, acute and chronic, and colic felt at the time of digestion of food.

कारुण्यसागर रसः ।

भस्मसूतं द्विधा गन्धं तथा चैव मृताभ्रकम् । दिनं सार्षपतैलेन पिष्ट्वा यामं विपाचयेत् । रसैर्मार्कवमूलोत्थैः पिष्ट्वा यामं विपाचयेत् । त्रिक्षारपञ्चलवणविषव्योषाग्निजीरकैः । सविडङ्गैस्तुल्य-भागैरयं कारुण्यसागरः । माषमात्रं ददीतास्य भिषक् सर्व्वातिसारके ॥ सज्वरे विज्वरे वापि सशूले शोणितोद्भवे । निरामे शोथयुक्ते वा ग्रहण्यां सान्निपातिके ॥ अनुपानं विनाप्येष कार्य्यसिद्धिं करिष्यति ॥

*Ka'runya Sa'gara rasa.*

One part of incinerated mercury, two parts, each, of sulphur, and mica, are to be rubbed for one day with mustard oil, and heated for three hours. The compound

is again to be rubbed with the juice of the roots of bhringara'ja and heated for three hours. The compound is then to be mixed with an equal quantity of the combined poweders of the following, (each equal in quantity) :— the thre alkalies (viz ; jabaksa'ra, swarjiksara), and borax, taken in equal quantities), the five salts, aconite, trikatu, roots of chitraka, jeera', and biranga. Pills are then to be made, six ractis in weight each This medicine cures all sorts of diarrhoea, acute or chronic, with fever or without fever, dysentery, colic and dropsy. Accompaniment is not so essential to this medicine.

## आनन्द वैभव रसः ।

दरदं मरिचं टङ्कममृतं मागधीसमम् । भ्रचपिष्टन्तु गुञ्जैकं रसमानन्दवैभवम् ॥ लेहयेन्मधुना चानु कूटजस्य फलत्वचोः । चूर्णितं कर्षमात्रन्तु त्रिदोषोत्थातिसारजित् ॥ दध्यन्नं दापयेत् पथ्यं दध्याजं तक्रमेव च । पिपासायां जलं देयं विजया च हिता निशि ॥

## *Ananda baibhaba rasa.*

Equal quantities of cinnaber, maricha, borax, aconite, and pippali are to be rubbed together, and taken in doses of one racti each. One tola' in weight of powdered seeds and bark of kutaja combined with a little of honey is to be taken, a little after taking the medicine. This medicine cures diarrhoea due to an excess of the three doshas. Diet, butter milk and curd prepared from goat's milk and boiled rice. Cold water may be allowed to quench the thirst. Taking a little of bhanga', at night, is considered salutary..

## प्रताप भैरव रसः ।

हिङ्गुलञ्च विषं व्योषं टङ्कणं गन्धकं समम् । जम्बीररससंयुक्तं मर्द्दयेद् यामकद्वयम् ॥ कासश्वासातिसारेषु ग्रहण्यां सान्निपातिके । अपस्मारेऽनिले मेहेऽप्यजीर्णे वह्निमान्द्यके ॥ गुञ्जमात्रः प्रदातव्यो रसः प्रताप भैरवः ।

## *Prata'pa bhairava rasa.*

Equal quantities of cinnabar, aconite, trikatu, borax, and sulphur are to be rubbed together, for six hours, with the juice of lime fruit, and made into pills, one racti in weight each. This medicine cures cough, asthma, diarrhœa, both acute and chronic, apoplexy, diseases due to the derangement of va'yu, sperma'torrhoea, indigestion and loss of appetite.

## महेशमङ्गल रसः ।

हिङ्गुलमहिफेनञ्च मुस्तकेन्द्रयवं तथा । जातीफलञ्च कर्पूरं टङ्कनञ्च विमर्दयेत् ॥ जलेन वटिका कार्य्या द्विगुञ्जापरिमाणतः । ज्वरातिसारिणे चैव तथातीसाररोगिणे ॥ ग्रहण्यां च प्रददीत रसो महेशमङ्गलः ॥

## *Mahesha mangala rasa.*

Equal quantities of cinnabar, opium, musta, indrajava, ja'tiphala, camphor, and borax are to be rubbed with water and made into pills two ractis in weight each.

This medicine cures diarrhoea, with or without fever, dysentery, and chronic diarrhoea.,

## दाक्षायणी रसः।

पारदाभ्रकसिन्दूरं गन्धं जातीफलं समम्। कूटजस्य फलञ्चैव धुस्तूरवीजानि टङ्कनम्॥ व्योषं मुस्ताभया चैव चूतवीजं तथैव च। विल्वकं सर्ज्जवीजञ्च दाड़िमीफलवल्कलम्॥ एतानि समभागानि निक्षिपेत् खल्लमध्यतः। विजयास्वरसेनैव मर्द्दयेत् श्लक्ष्णचूर्णितम्॥ गुञ्जाफलप्रमाणान्तु वटिकां कारयेद्भिषक्। एकां कुटजमूलत्वक्-कषायेण प्रयोजयेत्॥ आमातिसारं हरति कुरुते वह्निदीपनम्। मधुना विल्वशुण्ठेन रक्तग्रहणिकां जयेत्॥ शुण्ठीधान्यकयोगेन चातिसारं निहन्त्यसौ। जातीफलरसो ह्येष ग्रहणीगदहारकः।

## *Da'ksa'yani rasa.*

Equal quantities of mercury, mica, rasa-sinduram, sulphur, ja'tiphala indrajava, seeds of dhustura, borax, trikatu, musta', haritaki, seeds of mango, green bilva cut into pieces and dried, seeds of swarja, and bark of the pomegranate fruit are to be rubbed together with the water in which bhanga' has been kept immersed for some-time. Pills are then to be made, one racti in weight each. Accompaniment, decoction of the bark of roots of kutaja, mixed with honey. This medicine cures diarrhoea, with a'ma (undigested chyle, in the form of mucus or other-wise), and increases power of digestion. It is to be taken, in dysentery, with honey and decoction of green bilva fruit cut into pieces and dried; and with honey and decoction of shunthi and dhanya', in diarrhoea.

## षड्निष्क तैलम् ।

षड्निष्कं तिलतैलस्य निष्कं जम्बीरजं रसम् । लवणं पञ्चगुञ्जं च अङ्गुल्या मर्द्दयेद् दृढ़म् ॥ आमवातातिसारघ्नं लिह्येत् पथ्यं च पूर्व्ववत् ॥

## *Sarniska tailam.*

One and a half tola' of oil prepared from tila (sesamum), one fourth tola' of lime juice, and five ractis of rock-salt are to be rubbed steadily by means of the fingers, and licked, This cures diarrhoea. Diet, as stated below.

## अतिसारे पथ्यानि ।

वमनं लङ्घनं निद्रा पुराणाः शालिषष्टिकाः । विलेपी लाजमण्डश्च मसूरतुवरीरसः ॥ शशैणलावहरिणकपिञ्जलभवा रसाः । सर्व्वे क्षुद्रझषाः शृङ्गी खल्लिसो मधुरालिका ॥ तैलं छागघृतक्षीरे दधि तक्रं गवामपि । दधिजं वा पयोजं वा नवनीतं गवाजयोः ॥ नवं रम्भापुष्पफलं क्षौद्रं जम्बुफलानि च । भव्यं महार्द्रकं विल्वं शालुकञ्च विकङ्कतम् । कपित्थं वकुलं विल्वं तिन्दुकं दाड़िमद्वयम् । तालकं कञ्चटदलं चाङ्गेरी विजयारुणा । जातीफलञ्च ह्रीवेरं जीरकं गिरिमल्लिका । कुसुम्वरु महानिम्ब कषायः सकलो रसः । अन्नपानानि सर्व्वाणि दीपनानी लघूनि च ॥

*Shankha rasa.*

Four tolas, each, of the ashes of the bark of ta'ma'rind and pancha-lavanam are to be rubbed together with lime juice and dissolved with the same juice. Four tolas of purified conch-shell are to be heated by fire, and immersed in the solution. The process is to be repeated over and over again till the conch-shell is sufficiently roasted to be reduced to ashes. The conch-shell thus reduced to ashes is to be mixed with four tolas, each, of hingu and trikatu and one-fourth tola, each, of mercury, sulphur, and aconite. Pills are then to be made, one racti in weight, each. This medicine cures waste, grahani, and colic felt at the time of digestion of food.

कम्बुरसः ।

द्वौ चारौ रसगन्धकौ सलवणौ व्योषञ्च तुल्यं विषं चिञ्चाशंख-चतुर्गुणं रसवरे लिम्पाकजाते क्षतम् । वारं वारमिदं सुपाकचरितं लौहं चिपेद्विङ्गकं भृष्टं वङ्गसमं सुमर्द्दितमिदं गुञ्जाप्रमाणो भवेत् ॥ ख्यातः कम्बुरसो महाग्निजननः शूलान्तकृत् पाचनः कासश्वासविनाशनः चयहरो मन्दाग्निसन्दीपनः । वात व्याधिमहोदरादिशमनस्तृष्णामयोच्छेदकः सर्व्वव्याधिविनाशनः क्रिमिहरो दुष्टामयध्वंसनः ॥

*Kambu rasa.*

One, part, each, of javaksa'ra, sarjiksa'ra, mercury, sulphur, rocksalt, trikatu, and aconite, and four parts, each, of

ashes of bark of tamarind and burnt conch shell are to be mixed together and soaked in lime juice, over and over again, and then dried and subjected to heat by putam. The compound is then to be mixed with one part, each, of iron, hingu, and tin—all of these being rubbed together and made into pills one racti in weight, each. This medicine increases appetite and cures colic, cough, asthma, waste, diseases due to va'yu, udara-roga, worms, etc.

## अजीर्णारि रसः।

शुद्धसूतं तथा गन्धं पलमानं पृथक् पृथक्। अभया द्विपला चैव नागरस्त्रिपलः स्मृतः॥ कृष्णा च मरिचं तद्वत् सिन्धूत्थं त्रिपलं पृथक्। चतुष्पला च विजया मर्द्दयेन् निम्बुकद्रवैः॥ पुटानि सप्त देयानि घर्म्ममध्ये पुनः पुनः। अजीर्णारिरयं प्रोक्तः सद्यो दीपनः पाचनः। भक्षयेद् द्विगुणं भक्ष्यं पाचयेद्रेचयेदपि॥

*Ajirnari rasa*

Four tola's, each, of mercury and sulphur, eight tola's of haritaki, twelve tola's each, of shunthi, pippali, maricha, and rocksalt, and sixteen tola's of bhanga' are to be rubbed with lemon juice, and subjected to the sun's heat by putam, for seven times. This medicine immediately increases appetite, and digests food, even double in quantity to the ordinary meal. It also serves to clear the bowels.

## भास्कर रसः ।

विषं सूतं फलं गन्धं त्र्यूषणं टङ्कजीरकम् । एकैकं द्विगुणं लौहं शंखमभ्रं वराटकम् ॥ सर्व्वतुल्यं लवङ्गञ्च जम्बीरे भावयेद् भिषक् । सप्तवासरपर्य्यन्तं ततः स्याद् भास्करो रसः ॥ गुञ्जाद्वयप्रमाणेन वटीं कुर्य्याद् विचक्षणः । ताम्बूलीदलयोगेन वटीं संचर्व्य भक्षयेत् ॥ शूल रोगेषु सर्वेषु विसूच्यामग्निमान्द्यके । सद्योवह्निकरो ह्येष तन्त्र-नाथेन भावितः ॥

### *Bha'skara rasa.*

One part, each, of aconite, mercury, triphala', sulphur, trikatu, borax, and jeera'; two parts, each, of iron, burnt conch-shell, mica, and burnt cowri-shell; and fifteen parts of powdered lavanga are to be mixed together, and subjected to bha'vana', for seven days with lime juice. Pills are then to be made, two ractis in weight, each. This medicine cures all sorts of colic, cholera, and indigestion.

## प्रदीपन रसः ।

रसनिष्कं गन्धनिष्कं निष्कमात्रं प्रदीपनम् ॥ मानमर्द्धं प्रदातव्यं चुल्लिकालवणं तथा ॥ मर्द्दयित्वा प्रदातव्यमथास्य माषमात्रकम् ॥ अजीर्णे चाग्निमान्द्ये च दातव्यो रसवल्लभः ॥ ( प्रदीपनमिति चित्रकमुलं न तु तदाख्यं विषं तत् तु भैषज्ये परित्याज्यम् ) ॥

*Pradipana rasa.*

One-fourth tola', each, of mercury, sulphur, and roots of chitraka ; and one-eighth tola' of sal-ammoniac are to be rubbed together and made into pills, six ractis in weight, each. This medicine cures dullness of the digesting heat and indigestion.

## महोदधि रसः ।

एकैकं विषसूतञ्च जाती टङ्कं द्विकं द्विकम् । कृष्णात्रयं विश्वषट्कं गन्धं कपर्दकं द्विकम् ॥ देवपुष्पं वाणमितं सर्व्वं संमर्द्य यत्नतः । महोदधिरसो नाम्ना नष्टमग्निं प्रदीपयेत् ॥

*Mahodadhi rasa.*

One part, each of aconite and mercury ; two tola's, each, of ja'tiphala and bora'x ; three tola's of pippali, six tola's of shunthi ; two tola's, each, of sulphur and burnt cowri-shells, and five parts of lavanga, are to be rubbed together with water, and made into pills, one racti, in weight, each. This medicine increases the digesting heat.

## रसनागादि रसः ।

रसस्यैकं पलं दत्त्वा नागञ्च गन्धकं पलम् । क्षारत्रयं पलं देयं लवङ्गं पलपञ्चकम् ॥ दशमूली जयाचूर्णं तद्द्रवेन तु भावयेत् ।

चित्रकस्य रसेनाथ भृङ्गराजरसेन तु ॥ शिग्रु मूलद्रवैश्चापि ततो भाण्डे निरुध्य च । याममात्रं पचेदग्नौ मर्द्दयेदार्द्रकद्रवैः । ताम्बूली पत्रसंयुक्तं खादेन्निष्कमितं सदा ॥

*Rasa-na'ya'di rasa.*

Four tola's, each, of mercury, lead, sulphur, and the three ksa'ras ( viz. bora'x, javaksa'ra, and sarjiksa'ra, combined ); twenty tola's each, of lavanga, dashamula, and bhanga', are to be mixed together, and subjected to bha'vana' with the juice or decoction of dashamula, bhanga' roots of chitraka, leaves of bhringra'ja, and bark of the roots of shigru Dose, one fourth tola', each to be taken with betel leaves.

वड़वाग्नि रसः ।

टङ्कणं मरिचं तुल्यं पृथक् कर्षत्रयं भवेत् । सिन्दूरं द्वादशं निष्कं त्रिंशन्निष्कमयोमलम् ॥ चूर्णान्येतानि संयोज्य स्थापयेत्कुड-भाजने । शुद्धदेहो नरस्तस्य सेवेत माषमात्रकम् ॥ अद्यात् पथ्यं ततः स्वल्पं ततस्ताम्बूलभाग् भवेत् । उदराग्निर्नरस्यास्य वड़वाग्निसमो भवेत् । बहुनात्र किमुक्तेन रसायनमयं नृणाम् । काण्डपद्मारसे घृष्टं पुटपक्वं वरारसे । मार्कवस्वरसे घृष्टं सप्तकृत्वस्त्वयोमलम् ॥

*Baraba'gni rasa.*

Threé tola's, each, of bora'x, maricha, copper-sulphate, and rasa-sindura ( see page 105. vol. 1 ), and seven and half

tola's of mandura ( see page 91, vol, 3 ) are to be rubbed together. Dose, six ractis, each. The patient is first of all to purify himsilf by purgation and then commence taking medicine. Betel leaves are to be chewed after diet. This medicine increases appetite enormously, and serves to strengthen the body, and removes senile decay. Mandura, in this case, should be reduced to ashes by being rubbed with the juice of bha'rgi and triphala'; then rubbed for seven times with the juice of bhringara'ja.

## घृतमांसाशि रसः।

मृतं ताम्रं कणातुल्यं चूर्णं क्षौद्रविमिश्रितम्॥ निष्कार्द्धं भक्षयेन्नित्यं नष्टवह्निप्रदीप्तये। आर्द्रकस्य रसं क्षौद्रे पलमात्रं पिबेदनु। यथेष्टं घृतमांसाशी शक्तो भवति पावकः।

## *Ghrita-ma'nsa'shi rasa.*

Equal quantities of copper and powdered pippali are to be mixed together. This medicine, taken in doses of twelve ractis, each, cures loss of power of digestion. If taken with a little of honey and four tolas of ginger juice, it increases the power of digestion to such an extent as to enable it to consume a sufficient quantity of meat and clarified butter.

## क्रव्याद रसः।

पलं रसस्य द्विपलं बलेः स्याच्छुल्वायसी चार्द्धपलप्रमाणे। विचूर्ण्य सर्व्वं द्रुतमग्नियोगादेरण्डपत्रेऽथ निवेशनीयम्॥ कृत्वाऽथ तां

पर्पटिकां विदध्यात् लौहस्य पात्रे त्ववपूतमस्मिन् । जम्बीरजं पक्व-रसं पलानां शतं नियोज्याग्निमथाल्पमल्पम् ॥ जीर्णे रसे भावित-मेतदेतैः सुपक्वकोलोद्भववारिपूरैः । सवेतसाम्लैः शतमत्र देयं समं रजष्टङ्कणजं सुभृष्टम् ॥ बिड़ं तदर्द्धं मरिचं समञ्च ततसप्तवारं चणकाम्लकेन । क्रव्यादनामा भवति प्रसिद्धो रसस्तु मन्थानकभैरवोक्तः ॥ माषद्वयं सैन्धवतक्रपीतमेतत् सुधन्यं खलु भोजनान्ते । गुरूणि मांसानि पयांसि पिष्टं घृतानि सेव्यानि फलानि चैव ॥ मात्राति-रिक्तान्यपि सेवितानि यामद्वयाज्जारयति प्रसिद्धः ॥ कार्श्य स्थौल्य-निवर्हणो गरहरः सामार्त्तिनिर्णाशनो गुल्मप्लीहजलोदरादिशमनः शूलार्त्तिमूलापहः । वातश्लेष्मनिवर्हणो ग्रहणिकातीसारविध्वंसनो वातग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः ॥

*Kravyâda rasa.*

Four tola's of mercury, eight tolas, each, of sulphur, copper, and iron are to be mixed together, and heated in an iron pot by means of mild heat. When melted, it is to be thrown upon eranda leaves and reduced to parpati, ( see pag 262 ) which is to be boiled with four hundred tola's of lime juice, kept in another irone pot, heated by mild heat. When dried up, the compound is to be subjected to bha'vana' with two hundred tolas, each, of the decoctions of pancha-kola and amla-betasa. It is then to be mixed with sixteen tola's of bora'x, eight tola's of bira salt, and sixteen tola's of powdered maricha, and subjected to bha'vana', for seven times, with chanaka'mla.* Pills are then to be made, twelve ractis in

* Chan'aka'mla is a gruel prepared by boiled chanaka grams being immersed in water exactly in the same way as ka'nji ( see page 381. Vol, 3 )

weight, each. One such pill is to be taken with butter milk, mixed with rock-salt. This medicine digests, in six hours, such heavy food as meat, pudding, etc. It also cures gulma, enlargement of spleen, udara-roga, colic, grahani, and diarrhœa.

## वीरभद्राभ्रकम् ।

अभ्रकं पुटसहस्रमारितं कर्षयुग्ममति निर्म्मलीकृतम् । वासराणि नवतिं विमर्द्दितं चित्रकस्वरससाधुसिक्तकम् ॥ शृङ्गवेररसमर्द्दिता वटी कारिता सकलरोगनाशिनी । भक्षिता भुजगवल्लिपत्रकैः शृङ्गवेरशकलेन वा पुनः ॥ वह्निमान्द्यमभिनाश्य सत्वरं कारयेत् प्रखर पावकोत्करम् । श्वासकासवमिशोथकामल-प्लीहगुल्मजठरारुचि-भ्रमान् ॥ रक्तपित्तयकृदम्लपित्तकं शूलकोषजगदान् विसूचिकाम् । आमवातवहुवातशोणितं दाहशीतवलह्रासकार्श्यकम् ॥ विद्रधिं ज्वरगरं शिरोगदं नेत्ररोगमखिलं हलीमकम् । हन्ति वृष्यतममेतदभ्रकं वीरभद्रमतिवल्यमुत्तमम् । भक्षितं विविधभक्ष्यमागलं काष्ठसंघमपि भस्मतां नयेत् ॥

### *Birabhadra'bhrakam.*

Two tola's of mica reduced to ashes by being subjected to heat by putam, for one thousand times, are to be subjected to bha'vana', for ninety days, with the decoction of roots of chitraka, and then rubbed with ginger juice and made into pills. This medicine cures loss of power of digestion, asthma, cough, vomiting, dropsy, jaundice, enlargement of spleen, gulma, aversion to food, giddiness, imaciation, va'ta-racta, tumour, enlargement of liver, hemeptosis, amla-pitta', rheumatism, eye diseases, colic, cholera, etc.

वैश्वानरपोट्टली रसः ।

शुद्धो सूतबली चराचररजः कर्षांशतः कज्जलीं कृत्वा गोपयसा विमर्द्य दिवसं रुद्धा च मूषोदरे । सिद्धः कुम्भिपुटे खतश्च शिशिरः पिष्टः करण्डे स्थितः स्याद्वैश्वानरपोट्टलीति कथितस्तीव्राग्निदीप्तिप्रदः ॥

एकोनविंशतिं शृर्णैं मरिचानां घृतान्वितैः । देयोऽयं बल्लमानेन वयोबलमवेक्ष्य च ॥ गिलेद् गलविशुद्ध्यर्थं दधिभक्तमनुत्तमम् । कवलत्रयमानेन दुर्गन्धोद्गारशान्तये ॥ मध्यन्दिने ततो भोज्यं घृततक्रोपदंशयुक् । रात्रौ च पयसा सार्द्धं यद्वा रोगानुसारतः ॥ विदाहि द्विदलं भूरिलवणं तैलपाचितम् । विल्वं च कारवेल्लं च वृन्ताकं काञ्जिकं त्यजेत् ॥ इयं हि पोट्टली प्रोक्ता सिद्धेन महीभृता । मन्दाग्निप्रभवाशेषरोगसंघातघातिनी ॥ सिद्धवगस्यापि निर्दिष्टा भैरवानन्दयोगिना । लोकनाथोक्तपोट्टल्या उपचारा इह स्मृताः ॥ पोट्टल्यो दीपनाः स्निग्धा मन्दाग्नौ नितरां हिताः ॥

*Baishwa'nara-pottali-rasa.*

One tola, each, of mercury, sulphur and burnt cowri-shell are to be rubbed together to form a kajjali or black powder, which is to be rubbed for one day with cow's milk. It is then to be dried, put inside a crucible, and subjected to heat by a laghu putam. This medicine increases the digesting heat enormously. Having regard to the age and strength of the patient, this medicine is to be given, in doses of three ractis, each, with powder of nineteen marichas and a few drops of clarified butter. Three morsels of food are to be taken,

with curd, after taking the medicine. This serves to cleanse the throat and stop the rise of belching with bad odour. Diet to be taken, in mid-day, with a few drops of clarified butter, butter-milk, and sauce, and at night with milk, or with any other item of food stuff, considered salutary to the patient. The following are to be avoided at the time of taking this medicine :—things considered bida'hi ( see page 7, foot-note. ), pulses, excess of salt food cooked with oil, bilva fruit, ka'ra-bella, brinja'l (egg fruit), and ka'nji.

## वड़वाननो रसः ।

शुल्वायोघनभस्म वेल्लहलिनीव्योषाम्बु निम्बच्छदैः संयुक्तैश्च हरिद्रया समलवैः सार्द्धं च शुभ्रामृतैः । भृङ्गाम्भोविषतिन्दुकार्द्रकरसैः संपिष्य गुञ्जामिता संशुष्काबड़वामुखीति वटिका नाम्नोदिता तारया ॥ क्षिप्रं क्षुत्परिबोधिनी खलु मता सर्व्वामयध्वंसिनी श्लेषव्याधिविधुननी कासनहृच्छ्वासापहा शूलनुत् । त्वद्वैषम्यहरा च गुल्मशमनी मूलार्त्ति-मूलङ्कषा शोफव्याधिहरात्र किं वहुगिरा सर्व्वामयोत्सादनी ।

### *Baraba'nani rasa.*

Equal quantities of copper, iron, mica biranga, la'ngali, trikatu, ba'laka, ba'rk of nimba, haridra'. and white gauri pa'sa'na are to be mixed together, and rubbed with the juices of the following, in succession :—bhringara'ja, ba'laka, nux-vomica', and ginger. Pills are then to be made, one racti in weight, each. This medicine increases appetite very quickly, and it cures diseases due to an abnormal excess of kapha, and especially cough, asthma, heart-diseases, colic irregularity of the digesting heat, gulma, piles, and ascites

## विध्वंस रसः ।

विमर्द्द्य गन्धोपलटङ्कनेन, संभाव्य वारानथ सप्त जात्याः । तोयैः फलानामथ सिद्धसूतो विध्वंसनामा शमनो विसूच्याः ॥ अमुष्य गुञ्जा नव दापनीया हन्तुं विसूचीं सितया समेताः । तक्रौदनं स्यादिह भोजनाय पथ्यं च शाकं किल वास्तुकस्य ॥

## *Bidhwansa rasa.*

Equal quantities of mercury, sulphur, and bora'x are to be rubbed together, and subjected to bha'vana', for seven times, with the decoction of ja'tiphala. This medicine cures cholera. Dose, nine ractis each, to be taken with sugar. Diet, paste prepared from boiled rice, mixed with curd and pot-herb prepared from ba'stuka.

## द्वितीय क्रव्याद रसः ।

द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत् । पारदं पलमानेन मृतशुल्वायसं पुनः ॥ तोलमानेन संक्षिप्य पञ्चाङ्गुलदले क्षिपेत् । ततो विचूर्ण्य यत्नेन निक्षिप्यायसभाजने ॥ चुल्ल्यां निवेश्य यत्नेन ज्वालयेन्मृदुवह्निना । पात्रमात्रं हि जम्बीररसं सम्यग् विजारयेत् ॥ संचूर्ण्य पञ्चकोलोत्थैः कषायैः साम्लवेतसैः । भावना खलु कर्त्तव्याः पञ्चाशत् प्रमितास्ततः ॥ भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् । तदर्द्धं कृष्णलवणं सर्व्वतुल्यं मरीचकम् ॥ सप्तधा भावयेत् पश्चाच्चणकक्षारवारिणा । ततः संचूर्ण्य संशुष्कं कूपिकाजठरे क्षिपेत् ॥ अत्यर्थं गुरुमांसानि गुरुभोज्यान्यनेकशः । भुक्त्वा च कण्ठपर्य्यन्तं चतुर्वल्लमितं रसम् । पट्टमूलतक्रसहितं पिवेत् तदनुपानतः । क्षिप्रं तज्जीर्य्यते

भुक्तं जायते दीपनं पुनः ॥ रसः क्रव्यादनामायं प्रोक्तो मन्थानभैरवे । सिह्नणक्षौणिपालस्य भुरिमांसप्रियस्य च ॥ दिष्टो ग्रामं समासाद्य भैरवानन्दयोगिना । कुर्य्याद्दीपनमुद्धतं च पचनं दुष्टामसंशोषणं तुन्दस्थौल्यनिवर्हणं गरहरं मूलाग्निशूलापहम् ॥ गुल्मप्लीहविनाशनं ग्रहणिकाविध्वंसनं स्रंसनं वातग्रन्थिमहोदरापहरणं क्रव्यादनामा रसः ।

## *Dwitiya-kravya'da rasa.*

Eight tola's of purified sulphur are to be melted, in an iron pot, and mixed with four tola's of mercury, and one tola', each, of copper and iron. The mixed substance is then to be thrown upon some leaves of eranda and then powdered. This is then to be kept in an iron cauldron, and heated, with two hundred and fifty-six tola's of lemon juice by means of a mild fire. When dried up, the medicine is again to be powdered and subjected to bha'vana', for fifty times each, with the decoctions of pancha-kola, and amla-betasa. The compound is then to bo mixed with an equal quantity of borax, bira salt, half in quantity of borax, and maricha, equal in quantity to all the ingredients stated above. It is then to be subjected to bha'vana', for seven times, with a solution of an alchali prepared from the chanaka plant. When dried up, the medicine is to be powdered and kept for use. Twelve ractis of this medicine, taken with a little of salt and sour butter-milk, serve to digest a sufficient quantity of meat or other heavy food. This medicine increases the digesting heat enormously, and cures mucus, obesity, toximia', piles, colic, gulma, enlargement of spleen, grahani, constipation, swelling of glands due to va'yu, and all sorts of udara-roga, however malignant.

## राजशेखर रसः।

भागो मृतरसस्यैको वत्सनाभांशकद्वयम्। रसतुल्यं शिवाचूर्णं गन्धकं त्र्यूषणं तथा॥ विचूर्ण्यातिप्रयत्नेन भावयेत् सप्तधा रसम्। ताम्बूलीपत्रतोयेन स्वर्णधत्तूरजद्रवैः। पिष्ट्वा चणमिताः कुर्य्याच्छाया-शुष्कास्तु गोलिकाः॥ उष्णाम्भोयुतराजशेखररसो मन्दाग्निनिर्नाशनः। नानाकारमहाज्वरार्त्तिशमनो निःशेषमूलापहः। पाण्डुव्याधिमहोदरार्त्तिशमनः शूलान्तकृत् पाचनः शोफघ्नः पवनार्त्तिनाशनपटुः श्लेष्मामयध्वंसनः॥

### *Raja-shekhara rasa.*

One part of inciueratd mercury two parts of aconite, and one part, each, of haritaki, sulphur, and trikatu are to be mixed together, and subjected to bha'vana', for seven times, each, with the juices of betel leaves, and leaves of black dhus tura'. Pills are then to be made, two ractis in weight, each, and dried in a shady place. This medicine, if taken with a little of hot water, cures weakness of the digesting heat, all sorts of malignant fever, all sorts of piles, colic, a'scites, and diseases due to an abnormal excess of va'y'u and kapha.

## अग्निसुहृद् रसः।

शुद्धं सूतं विषं गन्धं द्विक्षारं पटुपञ्चकम्। दशकं तुल्यतुल्यांशं भर्जिता विजया नवा। दशानां तुल्यभागा सा तस्यार्द्धं शिग्रुमूलकम्। तत् सर्व्वं त्रिजयाद्रावैः शिग्रुचित्रकभृङ्गजैः॥ द्रावै र्दिनत्रयं मर्द्यं रुद्ध्वा भाण्डे पचेल्लघु। दीपाग्निना तु यामैकं शुष्कं यावत् समुद्धरेत्॥

सप्तधा चार्द्रकद्रावै र्भावयेच्चूर्णयेद्भिषक्। दीपकोऽग्निसुहृच्च चैषो निष्कैकं मधुना लिहेत्॥ प्रतिकर्षं गुडं शुण्ठी अनुपानं च दीपनम्।

*Agni-surhid-rasa.*

Equal quantitis of mercury, aconite, sulphur, javaksa'ra, sarjiksa'ra, and pancha-lavanam , half the quantity of all these combined, of green leaves of bhang.' duly fried with clarified butter ; and half the quantity of all the above ingredients combined, of roots of shigru—all these are to be mixed together, and rubbed for three days each, in succession, with the juice or decoction of bhanga', roots of shigru, roots of chitraka, and leaves of bhringara'ja. The compound is then to be confined in an earthen vessel, the mouth of which is to be closed by means of an earthen basin with mud and rags. The vessel is then to be heated, for three hours only, by means of the flames of a light, kindled in an earthen pot with wick made of cotton. When dried up, the compound is to be subjected to bha'vana', for seven times, with ginger juice. This medicine is to be taken, in doses of one-fourth of a tola', with a little of honey. One tola' of molasses, mixed with powdered shunthi and sofran, is to be taken, a little after taking this medicine.

अमृत रसः।

कुष्ठगन्धविषव्योषत्रिफलापारदैः समैः। भृङ्गाम्बुमर्द्दितो मुद्गमानोऽमृतरसः शुभः॥ अजीर्णश्लेष्मवातघ्नो दीपनो रुचिवर्द्धनः।

*Amrita rasa.*

Equal quantities of kustha, sulphur, aconite, trikatu, triphala', and mercury are to be rubbed together with the juice of bhringara'ja and made into pills, two ractis in weight, each. This medicine cures indigestion and abnormal excess of kapha and va'yu. It increases the digesting heat and removes aversion to food.

राक्षस रसः ।

ताम्रं पारदगन्धकौ त्रिकटुकं तीक्ष्णं च सौवर्चलं खल्ले मर्द्दय दिनं निधाय सिकताकुम्भेऽष्टयामं ततः । तत्र खेद्यं च रक्तशाकिनिभवं क्षारं समं मेलयेत् सर्व्वं भावितमातुलुङ्गजरसै नाम्ना रसो राक्षसः ॥ मन्दाग्नौ सततं ददीत मुनये प्रातः पुरा शङ्करः सौख्येऽस्मै च्यवनाय मन्दहुतभुग्वीर्य्याय नष्टौजसे । तेनादाय समस्तलोकगुरवे सूर्य्याय तस्मै ददे मर्त्त्यानामपि चास्य दानसमये गुञ्जाष्टकं वर्द्धयेत् ॥

*Ra'ksasa rasa.*

Equal quantities of copper, mercury, sulphur, trikatu, sea-salt, and sauvarchala salt, are to be rubbed together, and subjected to heat by the second kind of ba'luka'-jantram. The product is then to be mixed with an equal quantity of alchali, prepared from racta-shakini (red tanduliya) and subjected to bha'vana' with the juice of matulunga. Dose, eight ractis, each.

## जीवन रसः ।

रसगन्धौ सिन्धुकणाटङ्कणमभयाग्निहिमावल्लीकतकफलम् । क्रमशोत्तरं च विचूर्णितया बृहतीरससंयुतभावनया ॥ आर्द्रकहिङ्गुपुनर्नवपूतिच्छिन्नरसैः क्रमशस्तु भावनया । तस्य कलांशविषं च विमिश्रं तद्रसं माषसमानवटी या ॥ सर्व्वमजीर्णं कफमारुतपाण्डुशोफहलीमककामलशूलम् । नाशयते द्रागग्निकरोऽयं दीपनश्च जीवननाम रसेन्द्रः ॥

*jivana rasa*

One part of mercury, two parts of sulphur, three parts of rock-salt, four parts of pippali, five parts of bora'x, six parts of haritaki, seven parts of roots of chitraka, eight parts of hima'balli (swarna-ksiri), and nine parts of nirmali are to be mixed together, and subjected to bha'vana' with the juices of each of the following, in succession :—brihati ginger, hingu, punarnaba', putikaranja, 'and guruchi. The compound is then to be mixed with one-sixteenth its quantity of aconite and made into pills, six ractis in weight, each. This medicine cures all sorts of indigestion, abnormal excess of kapha and va'yu, anemia ascites, jaundice, and colic. It increases digesting heat.

## वड़वाग्निभ रसः ।

शुल्वं तालकगन्धकौ जलनिधेः फेनाग्निगर्भाशयं कान्तायो लवणानि हेमपवयो नीलाञ्जनं तुत्थकम् । भागो द्वादशको रसस्य तु दिनं वज्राम्बुघृष्टं शनैः सिद्धोऽयं बड़वाग्निभो गजपुटे रोगानशेषाम् जयेत् ।

*Baraba'nibha rasa.*

One part, each, of copper, orpiment, sulphur, sea-foam condensed, shami, ka'nta iron, pancha lavanam, gold diamond blue stibnite and copper-sulphate, and twelve parts of mercury are to be rubbed together with the juice of leaves of snuhi, for one day, and subjected to heat, by gajaputam. This medicine cures indigestion and many other diseases.

अनलजनक रसः ।

कणानागरगन्धकपारदकं गरलं मरिचं समभागयुतम् । लकुचस्य रसैश्चणकप्रमिता वटिका जनयत्यचिरादनलम् ॥

*Anala-janaka rasa.*

Equal quantities of pippali, shunthi, sulphur, mercury, aconite, and maricha are to be rubbed together with the juice of lakucha, and made into pills, two ractis in weight, each. This medicine increases digesting heat, enormously.

सर्व्वरोगान्तक रसः ।

शुद्धसूतं विषं गन्धमजमोदं फलत्रयम् । सर्जिक्षारं यवक्षारं वह्नि-सैन्धवजीरकम् ॥ सौवर्च्चलं विड़ङ्गानि सामुद्रं त्र्यूषणं समम् । विष-मुष्टिः सर्व्वतुल्या जम्बीराम्लेन मर्द्दितम् । मरिचाभां वटीं खादेदग्नि-मान्द्यप्रशान्तये । पथ्याशुण्ठी गुड़ं चानु पलार्द्धं भक्षयेत् सदा ॥ अग्निमान्द्ये रसः ख्यातो सर्व्वरोगकुलान्तकः ॥

*Sarva-roga'ntaka-rasa*

Equal quantities of mercury, aconite, sulphur, ajamoda', triphala', sarjiksa'ra, javaksa'ra, roots of chitraka, rock salt, jeera', sauvarchala salt, biranga, sea-salt, and trikatu, and nuxvomica, equal in quantity to all the above combined are to be rubbed together with lime juice and made into pills, of the size of a maricha (black-pepper). This medicine cures not only indigestion but all sorts of diseases.

त्रिफला-लौहम्।

त्रिफलामुस्तविड़ैश्च सितया कणया समम्।
खरमञ्जरीवीजैश्च लौहं भस्मकनाशनम्॥

*Triphala' Lauham.*

One part, each, of triphala', musta', biranga, sugar, pippali, and seeds of apa'ma'rga, and six parts of iron are to be mixed together. This medicine cures bhasmaka'gni.

विश्वोद्दीपकाभ्रम्।

अभ्रं निर्म्मलमारितं पलमितं चूर्णीकृतं यत्नतश्चव्यं चित्रक-मिन्द्रशूरकनकं मालूरपत्राद्र्ककम्। मूलं पिप्पलिसम्भवं मधुरिका नीपोऽर्कमूलं पृथक् चैषां सत्त्वपलैर्विमर्द्दितमिदं कर्ष्यं त्रिपिटट्ङ्कणम्॥ गुञ्जासम्मितमेतदेव वलितं तत् पारिभद्रद्रवैर्मन्दाग्निं चिरजातगुल्मनिचयं शूलाम्लपित्तं ज्वरम्। छर्दिं दुष्टमसृ-

रिकामलसकं श्वासञ्च कासं तृषाम् प्लीहानं यकृतं क्षयं स्वरहितं कुष्ठं महारोचकम् ॥ दाहं मोहमशेषदोषजनितं कृच्छ्रञ्च दुर्नामकमामं वातमिश्रितं नयनजं रोगं समुन्मूलयेत् । विश्वोद्दीपकनाम रोगहरणे प्रोक्तं पुरा शम्भुना सर्व्वेषां हितकारकं गदवतां सर्व्वामयध्वंसनम् ॥ पाषाणो यदि भक्षितस्तदपि तं कुर्य्यात् सुजीर्णं पुनर्वल्यं वृष्यतरं रसायनवरं मेधाकरं कान्तिदम् ॥

### *Biswoddipaka'abhram.*

Four tola's, each, of ashes of mica, decoction of chavya, juice of leaves of chitraka, ditto of nirgundi, ditto of dhustura, ditto of bilva ginger juice, decoction of roots of pippali, ditto of madhurika', ditto of roots of arka, and one racti of borax are to be mixed togetrer, and made into pills, one racti in weight, each. Accompaniment—juice of pa'ribhadra leaves.

This medicine cures slowness of digesting heat, gulma, colic, acidity, biliousness, small pox, alasaka, asthma cough, consumption, enlargement of liver and spleen, leprosy, piles, and diseases affecting urine.

This is an increaser of semen, killer of senile decay, increaser of memory and beauty.

## पर्पटीप्रयोगः ।

अग्निमान्द्यादौ पर्पटीप्रयोगः शुभफलप्रद एव ।

### *Application of Parpatis.*

It is desirable to apply parpatis in slowness of digesting heat especially in chronic and serious cases.

## अथ अग्निमान्द्यादौ पथ्यानि।

श्लैष्मिके वमनं पूर्व्वं पैत्तिके मृदुरेचनम्। वातिके स्वेदनञ्चाथ यथावस्थं हितञ्च यत्॥ नानाप्रकारो व्यायामो दीपनानि लघूनि च। बहुकालसमुत्पन्नाः सूक्ष्मा लोहितशालयः॥ विलेपी लाजमण्डश्च मण्डो मुद्गरसः सुरा। एणो वर्हो शशो लावः क्षुद्रमत्स्याश्च सर्व्वशः॥ शालिञ्चशाकं वेत्राग्रं वास्तुकं वालमूलकम्। रसोनं वृद्धकुष्माण्डं नवीनकदलीफलम्॥ शोभाञ्जनं पटोलञ्च वार्त्ताकुं निम्बुवारि च। कर्कोटकं कारवेल्लं वार्हतञ्च महार्द्रकम्॥ प्रसारणी मेषशृङ्गं चाङ्गेरी सुनिषण्णकम्। धात्रीफलं नागरङ्गं दाड़िम्वं यावपर्पटाः॥ अम्लवेतस-जम्वीर-मातुलुङ्गानि माक्षिकम्। नवनीतं घृतं तक्रं सौवीरकतु-षोदके॥ धान्याम्लं कटुतैलञ्च रामठं लवणार्द्रकम्। यमानी मरिचं मेथी धन्याकं जीरकं दधि॥ ताम्वूलं तप्तसलिलं कटुतिक्तौ रसावपि। मन्दानलेऽप्यजीर्णेऽपि पथ्यमेतत् नृणां भवेत्॥ रसभैषज्यसेवने त्याज्यानि तु परित्यजेत्॥

### *Actions and diet salutary to indigestion, etc.*

If not incompatible with the condition of the patient, it is desirable, at the earlist stages, to arrange vomiting in indigestion, due to phelgm ; soft purgative, in indigestion due to biliousness ; and fomenting the abdomen in indigestion due to an excess of va'yu. All sorts of physical exercise are also to be resorted to. The following items of food-stuff, which are light and increaser of digesting heat, are beneficial in indigestion :—rice prepared from a very fine red sha'li-paddy, of tree years' standing bilepi, paste prepared from paddy fried

and then devoid of husks, paste prepared from boiled rice, juice of mudga-pulse, liquor, meat of deer, peacock, hare, la'va,all sorts of small fish, such pot-herbs as sha'lincha, tender leaves of cane-plant, ba'stuka, prasa'rini, cha'ngeri, and sunis-anna, green radish, garlic, kusma'nda of long standing, green-banana fruits, shigru-beans, patola, brintáka,lemon fruit,karko taka, ka'ra-bella, brihati, wild ginger, mesha-shringa, ámalaki, oranges, pomegranates, paste prepared from barley, parpata fried with clarified butter, amlabetasa, lime fruit, citrous, honey, butter, clarified butter, butter milk, sauvira, tusodaka, dhánya'mla ( see page 380, vol. 3 ), mustard oil, hingu, salt, ginger, jama'ni, maricha methi,dhanya',jeera', and betel leaves, hot water, pungents and bitters

If medicines prepared from mercury and other minerals are to be taken, liquor and other things prohibited ( see pages 196 to 205, vol. 1 ) should be avoided.

## अग्निमान्द्यादावपथ्यानि ।

विरेचनानि विण्मूत्रवायुवेगविधारणम्। अध्यशनं समशनं जागरं विषमाशनम् ॥ रक्तस्रुतिं शिम्बी धान्यं मत्स्यं मांसमुपोदिकाम्। जलपानं पिष्टकञ्च जम्बकं सर्व्वमालुकम् ॥ कूर्च्चिकां मोरटं चोरं किलाटञ्च प्रपाणकम्। तालास्थिशस्यं तद्दालं स्नेहनं दुष्टवारि च ॥ विरुद्धासात्म्यपानान्नं विष्टम्भीणि गुरूणि च। अग्निमान्द्येऽप्यजीर्णे च सर्व्वाणि परिवर्ज्जयेत् ॥

### *Actions and food harmful in indigestion, etc.*

The following are injurious in indigestion etc.:—purgation, suppressing calls of nature, and passage of wind from the

abdomen, taking fresh food before the previous meal has been digested, full meal, keeping late hours at night, taking food, too much, or too little, or at irregular hours, sheding of blood, all sorts of pulses and beans, fish, meat the vagetable named upodika', drinking of water in excess, pistaka jambuka, potatoes and similar roots, hot milk immediately curdled by being mixed with something sour, water extracted from boiled sour milk, milk. sour milk condensed by heating, sugar dissolved into water, kernel of the stone of a palm fruit after the growth of sprout all sorts of oils and fats, impure water, food incongenial by combination ( see page 9 vol. IV ), food and drinks unaccustomed and incongenial, food giving rise to flatulence and heavy food.

---

पञ्चमोऽध्यायः ।

## अथ अर्शोरोगाधिकारः ।

—:o:—

# CHAPTER V.

## Piles.

### अर्शोरोगस्य निदानम् ।

गुदस्य वहिरन्तर्वा जायन्ते चर्मकोलकाः । सर्वरोगकराः पुंसामर्शांसीति हि विश्रुताः ॥ रुधिरस्राविण स्तेषां पित्तजा परिकीर्त्तिताः । वातजा निःसह्रोत्थाना उदावर्त्तं प्रकुर्वते । श्वयथुं श्लेष्मजाः कुर्य्युः सर्वं कुर्य्युस्त्रिदोषजाः ॥

*Symptoms of piles.*

The main indication of the disease is the growth of lumps of fiesh, either outside or inside the rectum. Piles may lead to the growth of all sorts of diseases. Bleeding piles are those which are due to an abnormal excess of pittam. Those which grow isolated from one another, and give rise to uda'varta, are due to abnormal excess of va'yu. Those, due to an abnormal excess of kapha, are accompanied with swelling. Piles, due to an abnormal excess of all the three doshas, have all those symptoms combined.

## अर्शश्चिकित्सितम्।

### अर्शःकुठार रसः।

शुद्धसूतं पलैकं तु द्विपलं शुद्धगन्धकम्॥ मृतं ताम्रं मृतं लौहम् प्रत्येकं तु पलत्रयम्। त्र्यूषणं लाङ्गली दन्ती पीलुकं चित्रकं तथा॥ प्रत्येकं द्विपलं योज्यं यवक्षारं च टङ्कणम्॥ उभौ पञ्चपलौ योज्यौ सैन्धवं पलपञ्चकम्॥ द्वात्रिंशत्पलगोमूत्रं स्नूही-क्षीरं च तत्समम्। मृदग्निना पचेत् स्थाल्यां सर्व्वं यावत् सुपिण्डितम्॥ माषद्वयं सदा खादेद्रसो ह्यर्शःकुठारकः। तक्रेण दाड़िमाम्भोभिः पक्वकन्देन वाऽथ तत्॥

### *Treatment of piles.*

### *Arsha-kuthára rasa.*

Four tola's of mercury, eight tola's of sulphur, twelve tola's, each, of copper and iron, eight tola's, each, of trikatu, langali, roots of danti, seeds of pilu, and roots of chitraka, twenty tolas, each, of javaksa'ra, bora'x, and rock-salt; hundred and twenty eight tola's, each, of she-calf's urine and milk of snuhi,—all these are to be heated (in a pot made of mud or iron) by means of a very mild heat, till the whole thing turns into a lump. Dose, twelve ractis each, to be taken with butter milk, or juice of pomegranates, or boiled or roasted tuber of shurana.

### विधुभूषण रसः।

मृतसूताभ्रहेमार्कतीक्ष्णमुण्डं सगन्धकम्। मण्डूरं माक्षिकं

तुल्यं मर्द्दं कन्याद्रवैर्दिनम् ॥ अन्धमूषागतं पाच्यं त्रिदिनं तुषवह्निना । चूर्णितं सितया माषं खादत् पित्तार्शसां जयेत् ॥

*Bidhubhusana rasa.*

Equal quantities of incinerated mercury, mica', gold. copper, steel, pig iron, sulphur, mandura, ( see page 91, vol. III ), and copper pyrites. are to be rubbed together, for one day, with the juice of kanya' and dried. The substance is then to be rubbed together, for one day, with the juice of kanya', and dried. It is then to be confined in a blind crucible and heated, for three days, being kept inside a heap of husks of paddy, put to fire. Dose, six ractis each, to be taken with sugar. This medicine cures bleeding piles,

## मूलारि रसः ।

सूतं लौहं चेन्द्रयवं शुण्ठीभल्लातचित्रकम् । विल्वमज्जाविड़ङ्गानि पथ्यातुल्यं विचूर्णयेत् ॥ सर्व्वतुल्यं गुड़ं योज्यं कर्षं भुक्त्वार्शसां जयेत् । श्लेष्मार्शसः प्रशान्त्यर्थं देयं मूलारिसंज्ञकम् ॥ मृततास्रेण संतुल्यं वल्लमात्रप्रमाणतः ।

*Mulári rasa*

Equal quantities of incinerated mercury, indra-java, shunthi, bhalla'taka, roots of chitraka, kernel of green bilva fruit, biranga, and haritaki, and molasses equal in quantity to all the above-named combined, are to be mixed together, and taken in doses of one tola', each. This medicine cures piles, dne to an abnormal excess of kapha. If an equal quantity of copper is mixed with it, the dose should be three ractis, each.

## सर्व्वलोकाश्रय रसः।

शुद्धं सूतं पलं गन्धं गन्धार्द्धं तालताप्यकम्॥ अमृतं रसकं चैव तालकार्द्धविभागिकम्। एतेषां कज्जलीं कुर्य्याद् दृढ़ं संमर्द्द्य वासरम्॥ त्रिदिनं मर्द्दयेच्चाथ दत्त्वा निम्बुजलं खलु। वटीकृत्य विशोष्याथ काचकूप्यां निधापयेत्॥ निष्कतुल्यार्कपत्रेण पिधायास्यं प्रयत्नतः। सार्द्धाङ्गुलमितोत्सेधं मृतस्नया तां विलेप्य च॥ ततो भाण्डत्रतीयांशे सिकतापरिपूरिते। निधाय सिकता मूर्द्धि सिकताभिः प्रपूरयेत्॥ रुद्धास्यं तदधो वह्निं ज्वालयेत् सार्द्धवासरम्। स्वाङ्ग-शीतलितं काचपुटादाकृष्य तं रसम्॥ पटचूर्णं विधायाथ ताम्रमभ्रं पलद्वयम्। पलार्द्धममृतं चैव मरिचं च चतुष्पलम्॥ एकीकृत्य क्षिपेत् सर्व्वं नारिकेलकरण्डके। साजगे गुञ्जाद्विमानो हरति रसवरः सर्व्वलोकाश्रयोऽयं। वातश्लेष्मोत्थरोगान् गुदजनितगदं शोष पाण्डामयं च। यक्ष्माणं वातशूलं ज्वरमपि निखिलं वह्निमान्द्यं च गुल्मं। तत्तद्रोगघ्नयोगैः सकलगदचयं दीपनं तत्क्षणेन।

### *Sarva-lokáshraya rasa.*

Four tola's, each, of mercury and sulphur ; two tola's, each, of orpiment and copper pyrites ; one tola' each, of aconite, and ca'la'mine—all these are to be rubbed together, and made into a kajjali or black owder, which is to be rubbed for three days, with lime-juice, dried, and put inside a glass bottle. The mouth of the bottle is then to be closed with one-fourth tola' of copper sheet, and the whole bottle is to be coated, all over, with mud, one and a half anguli thick. When dried, the bottle is to be placed inside an earthen vessel, one-third

of which has been filled with sand. The remaining portion of the vessel, up to the mouth of the bottle, is also to be filld with sand. The mouth of the vessel is then to be closed by means of an earthen basin. The vessel is then to be heated, for thirty six hours, by means of a fire made of wood. When cooled, by radiation of heat, the product is to be taken out, powdered, and sifted by means of a piece of cloth. It is then to be mixed with eight tola's, each, of copper and mica', two tola's of aconite, and sixteen tola's of maricha. The medicine, thus prepared, is to be kept in a pot made of cocoanut-shell. Dose, two ractis, each, to be taken with a few drops of clarified butter. This medicine cures all the diseases due to an excess of va'yu and kapha, diseases affecting the rectum, waste, anemia, colic due to va'yu, all sorts of fever, indigestion, and gulma. It cures other diseases also, if taken with suitable accompaniments. It increases the digesting heat, very quickly.

## मूलकुठार रसः।

गन्धकं तारताम्रं च कृत्वा चैकत्र पिष्टिकाम्। तत्समं चाभ्रकं तीक्ष्णं गन्धकं पञ्चमांशकम्॥ विषं च षोड़शांशेन द्वौ भागौ सूतकस्य च। एकीकृत्य प्रयत्नेन जम्बीरद्रवमर्द्दितम्॥ भाजने मृन्मये स्थाप्यं वराक्काथेन भावयेत्। दशमूलशतावर्योः क्काथे पाच्यं क्रमेण हि॥ अथोत्ताय्य प्रयत्नेन वटिकां कारयेद्बुधः। गुञ्जात्रयप्रमाणेन गुद-व्याधिकशूलनुत्॥

### *Mula-kutha'ra rasa.*

One part, each, of sulphur, silver, and copper are to be

rubbed together, and made into a lump with which is to be mixed, three parts, each, of mica' and steel ; three fifth part of sulphur ; one sixteenth part of aconite, and two parts of mercury. All these are to be rubbed together, with lime juice, and kept in an earthen pot, in which it is to be subjected to bha'vana' with the decoction of triphala'. The compound is then to be boiled with the decoctions of dashamula and shata'bari, in succession, till it is dried up. Pills are then to be made, three ractis in weight, each. This medicine cures piles and colic.

### वरनागादि रसः ।

वरनागं तथा व्योमसत्त्वं शुल्वं च तीक्ष्णकम् । सर्व्वमेकत्र विद्राव्य क्षिप्तालं चाल्पमल्पकम् ॥ चालयेदनिशं यावत्तालकं त्रिगुणं खलु । ततस्तेन विमर्द्द्याथ पिष्टिं कुर्य्याद्रसेन हि । ततो भल्लातकीवृक्षमूलस्थाने खनेच्च तान् । मासादाकृष्य तां पिष्टिं गव्यदुग्धे विनिक्षिपेत् ॥ ततो भल्लातकीतैलं हृतं पातालयन्त्रतः ॥ आयसे भाजने स्निग्धे पिष्टिकां विनिवेश्य च ॥ प्रस्थमात्रं हि तत्तैलं जारयेदतियत्नतः । तत्तैलभावितैर्गन्धैः पुटित्वा भस्मतां व्रजेत् ॥ ततः कार्त्तिकमासोत्थकौरण्टदलजै रसैः । रसं संमर्द्य संमर्द्द्य घर्म्मे संस्थाप्य मारयेत् ॥ तद्भस्म मेलयेत् पूर्व्वभस्मना समभागिकम् । वनशूरणनिर्गुण्डी-महाराष्ट्रीभकर्णिका ॥ वज्रवल्ली शिखी चैषां रसैः पिष्ट्वा विशोषयेत् । त्रिवारं मार्कवद्रावैर्द्रावयित्वा च शोषयेत् । चूर्णीकृत्य प्रयत्नेन क्षिपेत् क्वापि करण्डके ॥ सोऽयं मूलकुठारको रसवरो दीप्याग्निवेल्लोत्तमसंयुक्तः सघृतश्च वल्लतुलितः संसेवितो नाशयेत् । अर्शांस्यानननासिकाक्षिगुदजान्यत्युग्रपीड़ानि च प्लीहानं ग्रहणीं च गुल्मयकृतौ मान्द्यं च कुष्ठामयान् ॥

*Bara-na'ga'di rasa.*

Equal quantities of barana'ga ( See page 386. vol. 111 ), essence of mica', copper, and steel are to be melted together, in an iron cauldron, placed upon a mild fire. Orpiment, three times in weight of all the above-named combined, is to be thrown, little by little,upon the melted substance,the whole thing being rolled, constantly, by means of an iron ladle.

The substance is then to be rubbed with as much purified mercury, as is necessary to form a solid amalgam ( without leaving any superfluous mercury in a liquid state ). The lump, thus prepared, is to be kept buried, for one month, under the roots of a bhalla'taka tree. It is then to be taken out, and kept immersed, for some time, in cow's milk. It is next to be kept in an iron pot, the inner surface of which has been smeared with clarified butter. It is next to be roasted in that iron pot with one prastha ( sixty four tola's ) of oil, extracted from bhalla'taka fruits by means of the pa'ta'la jantram ( see page 264,vol.1 ). It is next to be roasted, in that iron pot, with sulphur,previously subjected to bha'vana'.with the same kind of oil, extracted from bhalla'taka fruits. The roasting is to be continued, till the whole thing is reduced to ashes. These ashes are then to be mixed with an equal quantity of mercury, reduced to ashes, by being rubbed, over and over again, with the juice of the leaves of yellow jhinti, and dried, each time, it is so rubbed. The compound is next to be rubbed with the juices of each of the following, in succession, and dried each time it is so rubbed :—wild shuranam, nirgundi, maha'ra'shtri gajakarni, ( hastikarna-pala'sha ? or hasti shundi ? ), asthisanha'ra, and roots of chitraka. It is then to be rubbed, for three times, with the juice of bhringara'ja, and powdered,when dried. Dose, three

ractis,. each, to be taken with jama'ni, roots of chitraka, biranga, and clarified butter. This medicine cures piles, diseases affecting the mouth, nose, and eyes; painful ailments affecting the rectum, enlargement of spleen and liver chronic diarrhoea, gulma, indigestion, and leprosy.

## महोदयप्रत्ययसार रसः।

रसग्रस्तसमुद्गीर्णगन्धकस्य पलत्रयम्। मृतसूताभ्रताम्रायः कर्ष कर्षं पृथक् पृथक्॥ पलं हिङ्गुलचूर्णस्य माक्षिकस्य पलत्रयम्। पलं कम्पिल्लकस्यापि विषस्यार्द्धपलं तथा॥ सप्ताहं मर्दयेत् सर्व्वं दत्वा चूर्णोदकं मुहुः। ततस्तद्गोलकं कृत्वा सप्ताहं चातपे क्षिपेत्॥ गुड़चूर्णं शिलाचूर्णं लिम्पेदङ्गुलिकाघनम्। त्रिपलं गन्धकं दत्त्वा क्रौञ्चग्राममथ च गोलकम्॥ गोलकस्योपरिष्टाच्च क्षिपेत्तालपलत्रयम्। संरुध्यातिप्रयत्नेन दद्याद्गजपुटं खलु॥ स्वाङ्गशीतलमाहृत्य गोलकं लेपनैः सह। विचूर्ण्य सप्तवारं हि विषतिन्दुफलोद्भवैः॥ द्रवैरथातपे शुष्कं क्षिपेद्रम्ये करण्डके। त्रिंशदंशेन वैक्रान्तभस्म तस्मिन् विनिक्षिपेत्॥ अयं हि नन्दीश्वरसंप्रदिष्टो रसो विशिष्टः खलु रोगहन्ता। निःशेषरोगेष्वहतप्रतापो महोदयप्रत्ययसारनामा॥ हन्यात् सर्व्वगुदामयान् क्षयगदं कुष्ठं च मन्दाग्नितां शूलाध्मानगदं कफं श्वसनतामुन्मादकापस्मृती। सर्वा वातरुजो महाज्वरगदान् नानाप्रकारां स्तथा वातश्लेष्मभवं महामयचयं दुष्टग्रहण्यामयम्॥

### *Mahodaya-pratyayasa'ra rasa.*

Twelve tola's of sulphur, extracted from kajjali or black sulphate of mercury; one tola, each, of incinerated

mercury, mica', copper, and iron ; four tola's of cinnabar, twelve tola's of copper-pyrites, four tola's of kampilla and two tola's of aconite are to be rubbed together for seven days, with lime water, made into a lump, and dried in the sun for a week. This lump is then to be coated all over with a paste, one anguli thick, prepared from an equal quantity of molasses, lime, and realger. In a crucible, put twelve tola's of powdered sulphur, upon which the lump is to be kept, covered with twelve tola's of powdered orpiment. Then, close the mouth of the crucible very carfully. It is next to be heated by gajaputam. When cooled by radiation of heat, the contents of the crucible are to be taken out, powdered and subjected to bha'vana',for seven times, with the juice of nuxvomica. When dried in the sun, the substance is to be mixed with one thirtieth its quantity of incinerated vaikra'nta (garnet). This madicine cures all sorts of piles, phthisis, leprosy, indigestion, colic, flatulence, cough, asthma, insanity, apoplexy, all sorts of diseases due to an excess of va'yu, all sorts of malignant fever all sorts of diseases due to an excess of va'yu, and kapha, and chronic diarrhoea of long standing.

## हिरण्यसुन्दर रसः ।

रसं च धौतमाक्षीकं कान्ताभ्रं नागहाटकम् । पृथ्वीभटेन संतुल्यं सर्व्वतुल्यं च गन्धकम् ॥ दत्त्वा विद्याधरे यन्त्रे पुटेदारण्यकोत्पलैः । स्वाङ्गशीतलमुद्धृत्य त्र्यूषणेन विमिश्रयेत् ॥ अर्शोव्याधौ कटीशूले चक्षुशूले च दारुणे । सन्निपाते क्षये श्वासे कासे मन्दानले ज्वरे ॥ कर्णशूले शिरःशूले दन्तशूले प्रयोजयेत् । पीनसे श्लेष्मि हृच्छूले

ग्रन्थिवाते च दारुणे ॥ ऐकाङ्गे वा धनुर्व्वाते कम्पवाते च मूर्च्छिते । ज्वरांश्च विषमान् सर्व्वान् हन्ति रोगाननेकधा ॥ सेवितः पथ्ययोगेन रसः हिरण्यसुन्दरः । गुञ्जामात्रं ददीतास्य यथायुक्तानुपानतः ॥ घृतेन संयुतो वाते मधुना पैत्तिके ज्वरे । पिप्पल्या श्लैष्मिके देयं पित्तोद्भूते च चान्दनैः ॥ तक्रेण श्लेष्मवातोत्थे वातपित्ते घृतान्वितम् । श्लेष्मपित्ते चार्द्रकेण निगुण्ड्या सान्निपातिके ॥ फलत्रयेण शूलेषु विषमेषु ज्वरेष्वथ । आर्द्रकेनाथवा दद्याद्वह्निमान्द्ये विशेषतः ॥ अभिष्यन्दे शिरःशूले गायत्रीवोलसंयुतम् ॥ पक्षिमांससमायुक्तं कफवाते च मूर्च्छिते ॥ एकाङ्गे च धनुर्व्वाते चौरयुक्तं च पीनसे । पाण्डुरोगे क्षये कासे मरिचाज्यैश्च कामले ॥ अजमोदाविडङ्गैश्च नाभिशूलेऽग्निमान्द्यजित् । रक्तज्वरेऽरुचौ देयः कदलीफलसंयुतः ॥ वोलेनाङ्गकटीशूले भाषितं नागवोधिना ॥

## *Hiranya-sundara rasa.*

Equal quantities of mercury, copper pyrites, load-stone, mica', lead, gold, and incinerated essence of bhuna'ga ( see page 236. vol II ) ; and sulphur, equal in quantity to all the fore-going combined, are to be rubbed together, and heated by means of the Vidya'dhara jantram ( see page 25I. vol. 1 ), in a fire, made of cowdung, found dried in pasturage. When cooled by radiation of heat, the contents of the vessel are to be taken out, and mixed with an equal quantity of powdered trikatu. This medicine cures piles, consumption, asthma, cough, indigestion, fever, pain in the ears, head, and teeth ; pinasa ( chronic catarrh ), enlrgement of spleen, pain in the heart, malignant gout, partial paralysis, titanus,

paralysis with tremor, apoplexy, and all sorts of chronic fever. Dose, one racti each, to be taken with honey or honey and sandle paste only in fever due to pittam; with powdered pippali in fever due to phlegm. with butter milk in diseases due to va'yu and kapha; with clarified butter in diseases due to va'yn and pittam; with ginger juice in diseases due to kapha and pittam; with leaves of nirgundi in diseases due to the three dosas; with triphala' in colic and chronic fever; with ginger juice in indigestion, the decoction of khadira and bola in catarrah and headache; with the soup of bird's meat in apoplexy and diseases due to an excess of kapha and va'yu; with milk in partial paralysis, titanus, and pinasa ( chronic catarrh ); with clarified butter and powdered maricha in anemia, cough due to consumption, and jaundice, with ajamoda' and biranga in colic in the navel, and indigestion, with ripe banana fruit in loss of appetite and fever which makes the patients body coarse and dry; and with bola in sciatica affecting only one-half of the waist.

## अर्केश रसः ।

नागं पारदगन्धकं त्रिलवणं वर्य्यर्कजं मेलयेत् एकैकं च पलं पलं त्रयमतः पञ्च क्रमान्मर्द्दयेत् । सर्व्वं तद्दिवसत्रयं तदनु तद्दत्त्वा पुटं भावनाः कुर्य्यात् सत्रिफलाग्निवेतसरसैः पञ्चाधिका विंशतिः ॥ पश्चैतत् क्रमशस्ततो गुड़भवैर्द्दत्तोऽस्य वल्लो जलैर्हन्त्यर्शांस्यखिलानि शूरणघृतैस्तस्यान्नमस्मिन् हितम् ॥ अर्केशे परिवर्ज्जयेत्तामिति मुनिः श्रीवासुदेवोऽवदत् कुष्माण्डीफलमाषपायसमति व्यायाममर्कातपम् ॥

## *Arkesha rasa.*

Four tola's, each, of lead and mercury; twelve tola's of

sulphur ; and twenty tola's of the three salts ( saindhaba, bira, and sauvarchala, combined ), are to be rubbed together for three days, with the juice of leaves of arka. The compound, thus prepared, is to be heated by putam, and then subjected to bha'vana' for five days, each, with the juice or decoction of haritaki, a'malaki, bibhitaki, roots of chitraxa, and betasa, the total number of bha'vana's being twenty fiive Dose, three ractis each, to be taken with molasses. dissolved with water. Diet, to be taken with clarified butter and suranam, after the medicine is digested. This medicine cures all sorts of piles. The following are to be avoided, at the time of taking this medicine :—kusma'nda, ma'sa-grams, rice prepared with milk, physical and mental exercise. in excess, aud sun's rays.

## तीक्ष्णमुख रस: ।

रसेन्द्रहेमार्कवरालवोलमुरायसं लौहमलाभ्रगन्धा: । ताप्यं च कन्यारसमर्द्दितोऽयं पक्व: पुटे तीक्ष्णमुखोऽर्शसां स्यात् ॥

*Tiksna-mukha rasa*

Equal quantities of mercury, gold, copper, triphalá, orpiment, bola, mura'-ma'nsi, iron, mandura, mica', sulphur and copper pyrites, are to be rubbed together with the juice of kanya', and heated by putam. This medicine cures piles,

## अर्शोविनाश रस: ।

अर्केक्षादन्त्यग्नियुग्मत्रिकटुकहलिनीपीलुकुम्भं विपक्वं प्रस्थे मूत्रस्य सम्यक्पयसि रसपलं द्वे पले गन्धकस्य । लौहस्य त्रीणि ताम्रात्

कुड़वमथ रजः चारयोश्चापि पञ्च चिप्त्वा स्थाल्यां पचेत् तु ज्वलति दहनतश्चूर्ण मर्शोविनाशः ॥

*Arsha-bindsha-rasa.*

One thousand and twenty four tola's of the decoction of meda', roots of danti, roots of chitraka, fruits of bhalla'-taka, trikatu la'ngali, and peelu, are to be boiled with sixtyfour tola's of she-calf's urine and sixty four tola's of milk of snuhi. When sufficiently condensed the following are to be mixed with the substance :—four tola's of mercury, eight tola's of sulphur, twelve tola's of iron, sixteen tola"s of copper, and eight tola's, each, of sarjiksa'ra and javak-sa'ra. The whole thing is to be heated in an iron pot, placed upon fire, which is to be extinguished, when the whole thing is reduced to ashes. This medicine cures piles.

त्रैलोक्यतिलक रसः ।

शुद्धकृष्णाभ्रजं सत्त्वं शोधितं काचटङ्कणम् । रेतयित्वा रजः कृत्वा भर्जयित्वा घृतेन तत् ॥ अष्टांशसस्यकोपेतं पुटेद्वारत्रयं ततः । त्रिवारं नृपावर्त्तेन लुङ्गस्वरसयोगिना ॥ चतुर्वारं च वर्षाभुवासामत्स्याचिकारसैः । गुग्गुलुत्रिफलाक्वाथै स्त्रिंशद्वाराणि यत्नतः ॥ तुल्यांशरसगन्धोत्थकज्जल्याष्टांशभागया । पुटेत् पञ्चाशतं वारान् मर्द्दयेच्च पुटे पुटे ॥ शोधितं रेतितं कान्तसत्त्वं च घृतमर्दितम् । पुटेदष्टांशदरदैः संयुतं लकुचाम्बुना ॥ दशवारं तथा सम्यक् तारैः शुद्धै मनोह्वया । तथा विंशति वाराणि वलिना मौनहृयसैः ॥ दशवाराणि

ताप्येन कृष्णागोघृतयोगिना । उभयं समभागं तत् पुटेन्निगुण्डि-
कारसैः ॥ रसगन्धोत्थकज्जल्या दशवारं पुटेत् पुनः । तस्मिन्नष्टांश
भागेन क्षिपेद्वैक्रान्तभस्मकम् ॥ राजावर्त्तं कलांशेन समभागेन पर्पटी ।
तत् सर्व्वं परिमर्द्याथ भावयित्वार्द्रकाम्बुना । गुड़ूच्याः स्वरसेनापि
भूकदम्बरसेन वा । भृङ्गराजरसेनापि चित्रमूलरसेन च ॥ व्योषगञ्जा
किनीकन्दैर्भूयोऽपग्राद्र्द्रवेण च । पटचूर्णं मतः कृत्वा क्षिपेच्छृङ्ग-
करण्डके ॥ त्रैलोक्यतिलकः सोऽयं ख्यातः सर्व्वरसोत्तमः । सर्व्व-
व्याधिहरः श्रीमान् शम्भुना परिकीर्त्तितः ॥ उदावर्त्तं च विड्वन्धं
व्यथां च जठरोद्भवाम् । लोहलमन्दवह्नित्वं शूलित्वमपि वन्ध्यताम् ॥
सूतिरोगानशेषांश्च शूलं नानाविधं तथा । परिणामाख्यशूलं च तथा
भिन्द्यात् समुत्कटम् ॥ रक्तगुल्मं च नारीणां रजःशूलं च दुःसहम् ।
अनुपानं च पथ्यं च तत्तद्रोगानुरूपतः ॥

*Trailakya-tilaka-rasa.*

Equal quantities of essence of mica,, purified glass, and bora'x, are to be powdered by filing. aud fried with clarified butter. The compound is then to be mixed with one eighth its quantity of incinerated sasyaka (see page 110, vol II), and heated by putam for three times. It is next to be mixed with an equal quantity of ra'ja'barta (see page 248. vol III) rubbed with the juice of ma'tulunga. and heated by putam for three times. It is next to be rubbed with the juices of punarnaba', ba'saka, and hilamochika, and heated by putam. for four times. It is next to be rubbed with the decoction of guggulu. and triphala' and heated by putam for thirty

times, The compound is then to be mixed with one-eighth its quantity of kajjali ( mercury and sulphur rubbed in equal quantities, to form a black powder ), and heated by putam, for fifty times. In performing the acts of putam, care should be taken to see that the substance is rubbed with the juice of the prescribed herbs, every time, the heating of putam is resorted to. ( In the last case, the substance is to be mixed only once, with kajjali and rubbed with water only, before every act of putam. ) The compound is then to be mixed with an equal quantity of ka'nta iron, reduced to ashes, and rubbed with clarified butter. The compound, thus formed, is to be mixed with one eighth its quantity of cinnabar, and heated by putam, for ten times, being rubbed each time, with the juice of lakucha. The compound is next to be mixed with one-eighth its quantity of silver, and realger, combined, and heated by putam, for ten times, being rubbed each time, with water only. It is then to be mixed with one-eighth its quantity of sulphur and heated by putam, for twenty times, being rubbed each time, with the juice of hilamochika'. The compound is next to be mixed with an equal quantity of clarified butter, prepared from black cow's-milk. It is next to be mixed with one-eighth its quantity of copper pyrites, and heated by putam, for ten times, being rubbed each time with the juice of leaves of nirgundi.

The compound is again to be mixed with one-eighth its quantity of kajjali ( prepared by rubbing equal quantity of mercury and sulphur) and heated by putam, for ten times, rubbing each time with water. The compound, thus prepared, is to be mixed with one-eighth its quantity of incinerated vaikra'nta (garnet ), one sixteenth its quantity of ra'ja'-varta ( lapis lazuli ), and

equal quantity of rasaparpati (see page 262). It is next to be subjected to bha'vana' with the juice or decoction of the following, in succession :—ginger, guruchi, bhukadamba, bhringara'ja, roots of chitraka, trikatu, tuber of ganja' kini, (carrot and turnip), and ginger (for the second time) When dried, the whole thing is to be powdered and sifted by means of a peice of cloth. This medicine cures all sorts of diseases, and specially, udávarta, constipation, colic, paralysis of the tongue, dullness of intellect, sterility, sutiká, colic felt at the time of digestion of food, racta-gulma, and painful menstruation. Diet and accompaniment are to be decided upon, in consideration of the nature of disease.

## करुणामय रसः ।

रसस्तु पादिकस्तुल्या विडङ्गमरिचाभ्रकाः । गङ्गापालङ्कजरसे खल्लयित्वा पुनः पुनः ॥ रक्तिमात्रा गुदार्शोघ्नो वङ्केरत्यर्थदीपनी । रसोऽयं करुणामयश्चार्शसां कुलनाशनः ॥

*Karunàmaya rasa.*

One fourth part of incinerated mercury, and one part, each, of biranga, maricha, and micá are to be rubbed together with the juice of gangá-pálanka (gangá-patri, or pachá-pátá), and made into pills, one racti, in weight, each. This medicine cures internal piles and increases appetite.

## तीक्ष्णादन रसः ।

मृतसूतार्कहेमाभ्रतीक्ष्णं मुण्डञ्च गन्धकम् । मण्डूरञ्च समं

तापयं मर्द्दयं कन्याद्रवै र्दिनम् । अन्धमूषागतं सर्व्वं ततः पाच्यं दृढ़ाग्निना ॥ चूर्णितं सितया माषं खादेत् तच्चार्शसां हितम् । रसस्तीक्ष्णादनोनाम चासाध्यमपि साधयेत् ॥

*Tiksnàdana rasa.*

Equal quantity of incinerated mercury, copper gold, micá, steel pig iron, sulphur, mandura, and copper-pyrites are to be rubbed, for one day, with the juice of kanyá. The lump thus made is to be confined in a blind crucible and heated by a strong fire. Dose, six ractis, each, to be taken with sugar. This medicine cures piles, otherwise incurable.

अर्शःकृपाण रसः ।

शुद्धसूतं द्विधागन्धं मृतलौहञ्च ताम्रकम् । प्रत्येकं द्विपलं दन्ती त्र्यूषणं शूरणं तथा ॥ शुभाटङ्गयवक्षारसैन्धवं पलपञ्चकम् । पलाष्टकं स्नुहीक्षीरं द्वात्रिंशश्च गवां जलैः ॥ आपिण्डितं पचेदग्नौ खादेत् माषद्वयं ततः । रसश्चार्शः कृपाणोऽयं सर्व्वरोगकुलान्तकः ॥

*Arsha-kripàna-rasa.*

Four tolás of mercuty, eight tolás, each, of sulphur, iron, copper, danti, trikatu, and suranam, five tolás, each, of bansha-lochana, borax, javaksára, and rock salt ; and thirty-two tolás of milk of sunhi, are to be mixed together, and boiled with hundred and twenty-eight tolás of calf's urine, by mild heat in an iron pot, till the whole thing is dried up. Dose, twelve ractis each.

### चक्रधर रसः ।

मृतसूताभ्रवैक्रान्तं ताम्रं कांस्यं समं समम् । सर्व्वतुल्येन गन्धेन दिनं भल्लातकद्रवैः ॥ मर्द्दयेत् यत्नतः पश्चाद् वटीं कुर्याद्द्विगुञ्जिकाम् । भक्षणात् गुदजान् हन्ति अर्शांसि सपरिग्रहान् । चक्रधररसो ह्ययं सर्व्वगुदामयप्रणुत् ॥

### *Chakradhara rasa.*

Equal quantities of incinerated mercury, mica', garnet, copper, and bell-metal, and sulphur equal in quantity to all the above named, combined, are to be rubbed, for one day, with the decoct on of bhalla'taka, and made into pills, two ractis, in weight, each. This medicine cures all sorts of piles.

### चञ्चत्कुठार रसः ।

रसगन्धकलौहानां प्रत्येकं भागयुग्मकम् । त्रिकटुदन्तिकुष्ठैकं षड्भागं लाङ्गलस्य च ॥ क्षारसैन्धवटङ्कानां प्रत्येकं भागपञ्चकम् । गोमूत्रस्य च द्वात्रिंशत् स्नुहीक्षीरं तथैव च ॥ यावत् पिण्डितं सर्व्वं तावन्मृद्वग्निना पचेत् । माषद्वयं ततः खादेत् दिवास्वप्नादि वर्ज्जयेत् । रसश्चञ्चत्कुठारोऽयमर्शसां कुलनाशनः ॥

### *Chanchat-kuthara rasa.*

Two parts, each, of mercury, sulphur, and iron; one part, each, of trikatu, danti, and kustha ; six parts of langali ;

and five parts, each, of javaksára, rock salt and borax ; thirty-two parts, each, of calf's urine, and milk of snuhi are to be mixed together and boiled in an iron pot by mild heat, till the whole thing is dried up. Dose, twelve ractis, each. This medicine cures all sorts of piles. Sleeping in day-time is specially to be avoided.

### शिलागन्धकवटकः ।

शिलागन्धकयोश्चूर्णं पृथग्भृङ्गीरसाप्लुतम् । सप्ताहं भावयेत् सर्पिर्मधुभ्याञ्च विमर्द्दयेत् ॥ अर्श सश्वानुलोम्यार्थं हताग्निवलवर्द्धनम् । रक्तिकाद्वितयं खादेत् कुष्ठादिरहितो नरः ॥

### *Shilä-jandhaka bataka.*

Powdered realgar and sulphur, are to be separately subjected to bhávaná, for seven times, with the juice of bhringaraja. Equal quantities of these two powders are to be rubbed together with honey and clarified butter. Pills are then to be made, two ractis, in weight, each. This medicine cures indigestion piles and leprosy.

### पञ्चमुख रसः ।

मृतसूताभ्रलौहानि मृतार्कगन्धकैः सह । सर्व्वानि समभागानि भल्लात सर्व्वतुल्यकम् ॥ वन्यशूरणकन्दोत्थैर्द्रवैर्योग्यप्रमाणतः । मर्द्दयेद्दिनमेकञ्च माषमात्र पिवेद्घृते ॥ भक्षणाद् हन्ति सर्व्वानि चार्शांसि च न संशयः । रसः पञ्चमुखाह्वयः कुष्ठार्शसां विनाशनः ॥

*Panchamukha rasa*

Equal quantities of incinerated mercury, mica', iron, copper and sulphur, and bhalla'taka, equal in quantity to all those combined, are to be rubbed together, for one day, with an adequate quantity of the juice of wild shuranam. Pills are then to be made six ractis, in weight, each, to be taken with clarified butter. This medicine cures piles and leprosy.

नित्योदित रसः ।

मृतसूतार्कलौहाभ्रविषं गन्धं समं समम् । सर्व्वतुल्यांश-भल्लातफलमेकत्र चूर्णयेत् ॥ द्रवैः शूरणकन्दोत्थैर्भाव्यं खल्ले दिनत्रयम् माषमात्रं लिहेदाज्यै रसस्वार्शांसि नाशयेत् । रसो नित्योदितो नाम गुदोद्भवकुलान्तकः ॥

*Nityodita rasa.*

Equal quantities of incinerated mercury, copper, iron, mica', aconite and sulphur ; and fruits of bhalla'taka equal in quantity to all those combined, are to be powdered very fine, mixed together, and subjected to bhavana', for three days, with the juice of shuranam. Dose, six ractis, each to be taken with a little of clarified butter. This medicine cures all sorts of piles.

अष्टाङ्गरसः ।

गन्धं रसेन्द्रं मृतलौहकिट्टं फलत्रयं त्र्यूषणवह्निभृङ्गम् । कृत्वा

सम' शाल्मलिकागुड़ूचीरसेन यामत्रितय' विमर्द्द्य । निष्क-प्रमाण' गदितानुपानैः सर्व्वाणि चार्शांसि हरेद्रसस्य ।

*Astânga rasa.*

Equal quantities of sulphur, mercury, mandura, triphala', trikatu, roots of chitraka and leaves of bhringarája, are to be rubbed together, for nine hours, with the juices of shálmali, and guruchi. Pills are then to be made one-fourth tolá, in weight, each. This medicine cures all sorts of piles, if taken with suitable accompaniment.

### अर्शोरोगे पर्पटी प्रयोगः

शुभफलद एव ।

Application of parpati in piles is found to be very efficacious.

### अर्शोरोगे पथ्यानि ।

विरेचन' लेपनमस्रमोक्षः क्षाराग्निशस्त्राचरितञ्च कर्म्म । पुरातना लोहितशालयश्च सषष्टिकाश्चापि यवाः कुलत्थाः ॥ पटोलपत्तूर-रसोनवह्नि पुनर्नवाशूरणवास्तुकानि । जीवन्तिका दन्तशठा सुरा च त्रुटिर्वयस्था नवनीततक्रम् ॥ क्रक्कोल धात्री रुचक' कपित्थ-मौष्ट्रानि मूत्राजशपयांसि चापि । भल्लातक' सर्षपजञ्च तैल' गोमूत्र सौवीरतुषोदकानि । वातापह' यच्च यदग्निकारि तदन्नपान' हितमर्श सेभ्यः ॥

*Diet and actions beneficial in piles.*

The following are beneficial in piles :—purgation, ointment prescribed, ( in Charaka, Sushruta and other works on purely herbal medicines ), shedding of blood, application of alchális and heating, as prescribed in (Sushruta, etc.), surgical operation ; such food stuffs as rice obtained from shâli and sastika paddy of two or three years' standing, barley, kulattha gram, patola, shâlincha, garlic leaves of chitraka, punarnavá, tuber of shuranam, ba'stuka, jivanti, lemon, wine, small ela', bra'hmi, butter, butter-milk, kakkola, a'malaki, citron, kapittha, urine, clarified butter and milk of camel, bhalla'taka, mustard oil, cow's urine, sauvira, tusha'mbu ( see page 382, vol III ), and all sorts of food stuff and drinks possessing the power of pacifying va'yu and increasing the digesting heat.

अर्शोरोगेऽपथ्यानि ।

आनूपमामिषं मत्स्यं पिन्याकं दधिपिष्टकम् । माषान् करीरं निष्पावं विल्वं तुम्बीमुपोदिकाम् । पक्वान्नं शालूकं सर्व्वं विष्टम्भीणि गुरूणि च । आतपं जलपानानि वमनं वस्तिकर्म्म च । विरुद्धानि च सर्वाणि मारुतं पूर्व्वदिग्भवम् । वेगरोधं स्त्रियं पृष्ठयानमुत्कटकासनम् ॥ यथास्वं दोषलञ्चान्नमर्शसः परिवर्ज्जयेत् । यत् पथ्यं यदपथ्यञ्च वक्ष्यते रक्तपित्तिनाम् । रक्तार्शोरोगिनां तत्तदपि विद्याद्विशेषतः ॥

# पञ्चमोऽध्यायः।

## अथोदर निदानम्।

रोगाः सर्व्वेऽपि मन्देऽग्नौ सुतरामुदराणि च। अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात्॥ रुद्धा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम्॥ आध्मानं गमनेऽशक्तिर्दौर्ब्बल्यं दुर्व्वलाग्निता। शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः॥ दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि। पृथग्दोषैः समस्तैश्च प्लीहवद्धक्षतोदकैः॥ संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु। तत्र वातोदरे वायुर्जायते जठरे सदा। स्पन्दो मणिपुरस्याधः ज्ञायते करचापतः॥ उद्गारो जठरे भारस्तथा च मलबद्धता। स्फीतिश्च जठरस्यापि वाताधिक्यात् कदापि वा॥ दोषाधिक्यादपि शोथः पाणिपान्नाभिकुक्षिषु॥ कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्व्वभेदनम्। शुष्ककासोऽङ्गमर्द्दोऽधोगुरुता मलसंग्रहः॥ श्यावारुणत्वगादित्यमकस्माद् वृद्धिह्रासवत्। सतोदभेदमुदरं तनुकृष्णशिराततम्॥ आध्मातदृतिवच्छब्दमाहतं प्रकरोति च। वायुश्चात्र सरुक्शब्दोविचरेत् सर्व्वतोगतिः॥ वातोदरे चिरोत्पन्ने नोपशान्ते जायते वै। मणिपुरसमन्तात् तु प्रत्यष्ठिलाथवाष्ठिला॥ तयेव क्षयसूचके घोरः क्षतकरे तथा। कार्य्यं चिकित्सनं तयोर्यत्नतः क्षयरोगवत्। नाभेरधस्तात् संजातः संचारी यदि वाचलः। अष्ठिलावद् घनो ग्रन्थिरूर्द्ध्वमायत उन्नतः॥ वाताष्ठीलां विजानीयाद् वहिर्मार्गावरोधिनीम्। एतामेव रुजोपेतां वातविण्मूत्ररोधिणीम्। प्रत्यष्ठीलामिति वदेज् जठरे तीर्य्यगुत्थिताम्॥ पित्तोदरे

ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता। भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित्॥ पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते॥ धूमायते मृदुस्पर्शं चिप्रपाकं प्रदूयते॥ श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम्॥ निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता। उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत्। चिराभिवृद्धिकठिनं शीतस्पर्शं गुरु स्थिरम्॥ स्त्रियोऽन्नपानं नखलोममूत्रविड़ार्त्तवैर्युक्तमसाधुवृत्ताः। यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बु दूषीविषसेवनाद्वा॥ तेनाशु रक्तं कुपिताश्च दोषाः कुर्य्युः सुघोरं जठरं त्रिलिङ्गम्। तच्छीतवाते भृशदुर्द्दिने च विशेषतः कुप्यति दह्यते च। स चातुरो मुह्यति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च। दूष्योदरं कीर्त्तित मेतदेव॥ यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत्। सञ्चीयते तस्य मलः सदोषः शनैः शनैः सङ्करवच्च नाड्याम्॥ निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्। हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति॥ शल्यं तथान्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा। तस्मात् स्रुतोन्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः॥ नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम्। एतत् परिस्राव्युदरं प्रदिष्टं जलोदरं कीर्त्तयतो निबोध॥ यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ़ः। पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि॥ स्नेहोपलिप्तेष्वथवापि तेषु जलोदरं पूर्व्ववदभ्युपैति। स्निग्धं महत् तत् परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च॥ यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि जलोदरं तत्॥ बह्वुदरामयानां हि यदेकत्र समन्वयः। महोदर स एव स्याद् रोगोऽयमति भीषणः॥

# CHAPTER VI.

## *Diseases affecting the belly.*

Slowness of the digesting heat is the cause of all sorts of diseases and especially of those affecting the belly. The latter arise out of indigestion, eating of dirty food and accumulation of stool in the intestines. What happens just before the appearance of these diseases is this :- abnormal excess of the three doshas, accumulated for a long time, block the passages carrying sweats and other fluids, and thereby pollute the pra'na váyu, the apána váyu, and the digesting heat. The following are the common symptoms characterising all sorts of diseases affecting the belly :— flatulence, difficulty experienced in movement, weakness, weakness of the digesting heat, swelling of some of the limbs, lethargy felt in the movement of the limbs, difficulty in passing wind and stool, heating sensation, and drowsiness. These diseases are of eight different kinds, viz., (1) va'todara (formation of gas in the stomach) (2) pittodara (stomach affected by an abnormal excess of pittam), (3) kaphodara stomach affected by an abnormal excess of kapha), (4) tridosodara or dusyodora ( stomach affected by an abnormal excess of the three dosas ), (5) plihodara and jakrithudara (enlargement of spleen and liver ), (6) baddhodara ( malignant constipation ), (7) kshatodara ( ulcer in the belly ) and (8) jalodara ( dropsy ).

Symptoms characterising these different kinds of udara rogas are described below :—

### (1) *Va'todara.*

This is signified by the formation, in the stomach, of gas,

which causes the throbbing of the glands down below the navel, felt by the pressure of the fingers ; belching, heaviness felt in the belly ; constipation ; and occasional swelling of the belly due to wind. In advanced stages, the diseases is attended with the following symptoms :—swelling of hands, feet, navel, and belly ; pain in the sides of the belly, stomach, waist, and the back ; pain in the joints of limbs, dry cough, pain in the limbs, heaviness in the lower part of the body, accumulation of stool in the intestines, reddish blackness of the skin, etc., sudden increase or decrease in the size of the belly ; pain and appearance of thin and black arteries all over the belly ; and rise of sound in the belly, resembling that coming out of a bellows when blown. Wind, in this case, moves to and fro in the belly causing pain and sound.

Va'todara of long standidg, if not cured, is generally followed by a growth ( due to swelling of the glands round about the navel ). It is sometimes movable and sometimes immovable, widened at the top, and projecting upwards. It obstructs the passages of wind, stool, and urine. This growth is called asthila', if it is just below the navel, and praty-asthila', if it is a little outside the navel. Both of them are indicators of waste ( consumption ) and may lead to ulcers in the lungs ( causing sometimes spitting or vomiting of blood). They are to be treated exactly in the same way as phthisis.

### (2) *Pittodara.*

The following are the symptoms of pittodara :—fever, loss of consciousness, burning sensation, thirst, bad taste in the mouth, giddiness, diarrhoea, yellowishness of the skin, etc.

The belly, in this disease, becomes wet with perspiration, emiting heat, having a burning sensation, soft in touch, and is pervaded with nerves having yellowish grey or copper-like colours. It seems to emit smoke ; and gradually develops ulceration in the internal surface which becemes full of constant pain.

## *(3) Kaphodara.*

The following are the symptoms of this disease :—weakness of the limbs, want of sensitiveness of the skin, swelling, heaviness of the limbs, sleepiness, nausea, aversion to food, gasping, cough, and whiteness of the skin, etc.

The belly, in this disease, becomes large in size, inactive, having a glossy surface, stiff by gradual enlargement, cold in touch, heavy, rigid, and full of nerves white in colour.

## *(4) Tridosodara or Dusyodara.*

Food, contaminated by nails, hair, urine, stool, and mense-blood ( sometimes mixed by vicious women with the food or drink given to the male objects ol their love unrequited, under the superstitious belief that such a food taken unknowing by a man would make him develop a blind love for the woman who contaminated the food in the above way), or poison resulting from an incongenial combination of food stuff given by enemies, or poisoned fish or polluted water or poison of slow potency, if taken with food, pollute the blood and the three doshas resulting in serious udara-roga due to the abnormal excess of the three doshas.

Such a disease is much increased in a chilly and stormy weather and causes inflammation in the affected region,

making the patient anemic, thin, with his throat dry with thirst, and leading to the loss of his conciousness every now and then.

### (5) *Pleehodara and Jakrithudara.*

( see later ),

### (6) *Baddhodara ( malignant constipation ).*

The inner surface of the intestines, in this disease, is covered with sticky food, hair, pebbles, etc, and cause the gradual accumulation of stools (like a heap of dust gradually accumulated), which passes out in small quantities and with great difficulty, leading to the enlargement of the space between the heart and the navel.

### (7) *Kshatodara.*

Nails, thorns, or such other prickly or pointed substances, taken with food or otherwise found their way inwards. may pierce the intestines and stick to them, causing a profuse discharge, from those places, of watery substance which accumulates in the abdomen below the navel' and passes often through the rectum causing an intense pain.

### (8) *Jalodara ( dropsy ).*

Drinking of cold water or anointing the body with oil immediately after drinking of oil, clarified butter or tallow ; application of douche of oil ; vomiting, purgation, or application of a special douche, called niruha basti, corrupts the movements of watery fluids in the system leading to the oozing

out of water from the affected veins and accumulation of the same in the belly, which becomes glossy, enlarged, and swollen causing a painful sensation around the navel. In this disease, the belly, if tossed, rolls, and shakes with a kind of sound, exactly like a leather bag filled with water.

(9) Mahodara

Combination of more than one udara-roga is called mahodara. It is a very troublesome disease.

## उदररोग चिकित्सा ।

Treatment of Udara roga.

### उदररोगे विरेचनम् ।

आदौ सर्व्वोदराणां च देयमुक्तं विरेचनम् । गोमूत्रैर्वाऽथ गोक्षीरै र्योज्यमेरण्डतैलकम् ॥ कर्षमात्रः प्रयत्नेन देयो ततो रसः पुनः ॥

*Purgation in udara roga.*

In all sorts of udara-roga, the patient is first of all to be given a purgative such as binoda-vidyadhara or surechana rasa ) or one tola of castor oil mixed with cow's milk or cow's urine. He is then to be given medicines as given below.

### जलोदरे जलस्रावः ।

नाभ्यन्तरे जलस्रावमपि शस्याज् जलोदरम् ।
सर्व्वोदरहरं योज्यं गुड़नागरयोः पलम् ॥

*Tapping of water in dropsy.*

Tapping of water, a little below the navel, helps to pacify dropsy. Four tolas of molasses combined with shunthi may cure all sorts of udara-roga (in early stages).

Iatro-chemical medicines applicable in udara-rogas.

## त्रैलोक्यसुन्दर रसः ।

शुद्धसूतं द्विधा गन्धं ताम्राभ्रं सैन्धवं विषम् । कृष्णजीरं विड़ङ्गञ्च गुड़ूचीसत्त्व चित्रकम् ॥ उग्रगन्धा यवक्षारं प्रत्येकं कर्षमात्रकम् । निर्गुण्डिकाद्रवैरग्निबीजपुरद्रवैर्दिनम् ॥ मर्दयेच्छोषयेत् सोऽयं रसस्त्रैलोक्यसुन्दरः । गुञ्जाद्वयं घृतै र्लेह्यं वातोदरकुलान्तकम् ॥ वह्निचूर्णं यवक्षारं प्रत्येकञ्च पलद्वयम् । घृतप्रस्थं विपक्तव्यं गोमुत्रैश्च-चतुर्गुणैः । घृतावशेषं कर्त्तव्यं कर्षमात्रं पिबेदनु ॥

*Trailokya sundara rasa.*

One tola', each, of mercury, sulphur, copper, mica, rock-salt, aconite black jeera', biranga, sugar-like essence of guruchi, roots of chitraka, bacha', and java-kshara, and two tola's of sulphur are to be mixed together and subjected to bha'vana' with the juices of nirgundi, roots of chitraka and bijapura, for one day, each. Pjlls are then to be made, two ractis in weight each, to be taken with a few drops of clarified butter. This medicine cures va'todara.

The following ghritam is to be taken in doses of one

tola' only, just after taking the above medicine: One prastha (64 tolas) of cow's ghritam and eight tolas, each, of powdered roots of chitraka and javaksha'ra are to be boiled (by mild heat in an iron cauldron) with 256 tolas of cow's urine, reducible to 64 tolás (to be sifted by means of a piece of cloth).

## इच्छाभेदी रसः ।

शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कणम् । जैपाला द्विगुणाः प्रोक्ताः सर्व्वमेकत्र पेषयेत् ॥ इच्छाभेदी द्विगुञ्जः स्यात् सितया सह पाययेत् । पिवेत् तु चुल्लकान् यावत् तावद् वारान् विरेचयेत् ॥ तक्रौदनञ्च दातव्यं भेदात् परं यथेच्छया ॥

*Ichha'bhedi rasa.*

One part, each, of shunthi, maricha, mercury, sulphur, and borax, and two parts of croton-seeds are to be rubbed together with water, and made into pills, two ractis in weight, each. One such pill is to be taken with sugar dissolved with water. Bowels will be moved as many times as sugar-water, contained in the hollow of the palm, will be sipped. Diet, boiled rice with butter-milk, to be given after the evacuation of the bowels.

## शीतसेवनान्त रसः ।

शुद्धसूतस्य माषैकं गन्धकान्माषकत्रयम् । विभीतकस्य माषैकं धात्र्याश्चैव तु माषकम् ॥ माषद्वयञ्च पिपल्याः शुण्ठीनां माषकत्रयम् ।

जैपालवीजमज्जाया गुड़कं विंशति तथा ॥ अम्ललोनीरसैः सार्द्धं तोयमुष्णं पिवेदनु । तावद् विरिच्यते वेगाद् यावच्छीतं न सेव्यते ॥

*Shita-sebananta rasa.*

one sixteenth tola of mercury, three sixteenth tola of sulphur, one sixteenth tola of bibhitaki, one sixteenth tola of ámalaki, one eighth tola of pippali. three sixteenth tola of shunthi, and 20 in number of purified croton seeds are to be rubbed together with the juice of ámalaki, and made into pills two, ractis tn weight, each, to be taken with a little of hot water and juice of ámalaki. Bowels are moved by this medicine so long as cold water is not drunk.

स्वेच्छाभेदी रसः ।

सूतं गन्धञ्च मरिचं टङ्गनं नागराभये । जैपालवीजसंयुक्तं क्रमोत्तरगुणं भवेत् ॥ सर्व्वगुल्मोदरे देयः स्वेच्छाभेदी त्वयं रसः । द्वित्रिगुञ्जां वटीं भुक्त्वा भक्ततोयं पिवेदनु ॥

*Swechha-bhedi rasa.*

One part of mercury, two parts of sulphur, three parts of maricha, four parts of borax, five parts of shunthi, six parts of haritaki, and seven parts of croton seeds are to be rubbed together, and made into pills two or three ractis in weight each, to be taken with water in which boiled rice has been washed.

जलोदरहर रसः ।

पिप्पली मरिचं ताम्रं रजनीचूर्णसंयुतम् । स्नुह्यीक्षीरैर्दिनं

मर्द्दं तुल्यं जैपालवीजकम् ॥ नित्यं गुञ्जाद्वयं खादेत् सद्यो हन्ति जलोदरम् । जलोदरहरो नाम रसो जलोदरप्रणुत् ॥ रेचनानाञ्च सर्वेषां दध्यन्नं स्तम्भने हितम् । दिनान्ते च प्रदातव्यमन्नं वा मुद्गयूषकम् ॥

*Jalodara-hara rasa.*

One part. each, of pippali, maricha, copper, and powdered turmeric, and four parts of croton seeds are to be rubbed together, for one day, with the milk of snuhi, and made into pills, two ractis in weight, each. This medicine cures dropsy very soon. Diet, curd mixed with boiled rice, which can stop movement of the bowels, quickly. Boiled rice with juice of mudga should also be given in the afternoon.

## जलोदरारि रसः ।

रसेन गन्धं द्विगुणं शिला च निशा च वीजं जयपालकस्य । फलत्रयं त्र्यूषणकञ्च चित्रं सर्व्वं विचूर्ण्यापि विभावयेच्च ॥ दन्तीस्नुह्योभृङ्गरसे पृथक् च सम्भाव्य संशोष्य च सप्तवारान् । वयोवलं वीक्ष्य तथा ददीत जाते विरेके च ददीत पथ्यम् ॥ अन्नं सतक्रं शिशिरानुशायि जाते बले तत् पुनरेव दद्यात् । तक्रेण रोगः समुपैति शान्तिं सिद्धो रसो नाम जलोदरारिः ॥

*Jalodara'ri rasa*

One part of mercury, one part of sulphur, and two parts, each of realgar, haridra', croton seeds, triphala', trikatu, and roots of chitraka, are to be mixed together, and subjectsd

to bha'vana', for seven times each, with the juices, respectively, of roots of danti, leaves of snuhi, and leaves of bhringara'ja. Dose to be decided upon in consideration of the age and strength of the patient. Cold diet is to be given with butter-milk, after a sufficient movement of the bowels. Butter-milk is to be drunk by the patient, every now and then. This medicine cures jalodara ( dropsy ).

## नाराच रसः ।

सूतं टङ्कणतुल्यांशं मरिचं सूततुल्यकम् । गन्धकं पिप्पली शुण्ठी द्वौ द्वौ भागौ विचूर्णयेत् ॥ सर्वतुल्यं क्षिपेद् दन्तीवीजं निस्तुषमेव च । द्विगुञ्जो रेचनं सिद्धं नाराचोऽयं महारसः । गुल्म प्लीहोदरं हन्ति पिवेत् तण्डुलवारिणा ॥

## *Na'ra'cha rasa.*

One part, each of mercury, borax, and maricha, and two parts, each, of sulphur, pippali, and shunthi, and nine parts of purified croton seeds are to be rubbed with water and made into pills, two ractis in weight each. to be taken with honey and rice water ( i, e water in which powdered rice has been kept immersed for at least twenty four minutes ). This medicine cures gulma and spleen.

## वह्निरसः ।

सूतस्य गन्धकस्याष्टौ रजनी त्रिफला शिला: । प्रत्येकञ्च द्विभागं स्यात् त्रिवृज्जैपालचित्रकम् ॥ प्रत्येकं स्यात् त्रिभागञ्च व्योषं दन्तिकजीरकम् । प्रत्येकं सप्तभागं स्यादेकीकृत्य विचूर्णयेत् ॥

जयन्तीस्नुक्पयोभृङ्ग-वह्नि-वातारितैलकैः । प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् ॥ महावह्निरसो नाम्ना निष्कमुष्णजलैः पिबेत् । विरेचकं भवेत् तेन तक्रभक्तं ससैन्धवम् ॥ दिनान्ते दापयेत् पथ्यं वर्जयेच्छीतलं जलम् । सर्व्वोदरहरः प्रोक्तः श्लेष्मवात-हरः परः ।

*Maha'-bahni rasa.*

Eight parts, each, of mercury and sulphur ; two parts, each, of haridra´; triphala', and manas-shila' ; three parts, each, of roots of trivrit, croton seeds, and roots of chitraka, and seven parts, each, of trikau, roots of danti, and jeera' are to be mixed together, and subjected to bha'vana', for seven times each, in succession, with the juice of leaves of jayanti, milk of snuhi, juice of bhringara'ja leaves, decoction of roots of chitraka, and castor oil. Dose one fourth of a tola´ to be taken with hot water. Diet, boiled rice with butter-milk and rock-salt, to be taken only in the after-noon. Cold water is to be avoided. This medicine cures all sorts of udara-roga and excess of va'yu and kapha.

## पिप्पल्याद्यं लौहम् ।

पिप्पलीमूलचित्राभ्र-त्रिकत्रयेन्दुसैन्धवम् ।
सर्व्वचूर्णसमं लौहं हन्ति सर्व्वोदरामयम् ॥

*Pippalya'dya lauha.*

Equal quantity of roots of pippali, roots of chitraka, mica,

trikatu, triphala', trimada ( roots of chitraka, musta', and biranga ), camphor, and rock-salt are to be mixed with iron, equal in quantity to all the above-named combined. This medicine cures all sorts of udara-roga. ( Dose, six ractis, each. )

### उदरारिरसः ।

पारदं शिखितुल्यञ्च * जैपालं पिप्पलीसमम् । आरग्वध फलान् मज्जा वज्रीक्षीरेण मर्द्दयेत् ॥ माषमात्रां वटीं खादेत् स्त्रीणां जलोदरं जयेत् । चिञ्चाफलरसं चानु पथ्यं दध्योदनं हितम् । जलोदरहरञ्चैव तीव्रेण रेचनेन च ॥ *शिखि इत्यत्र शुक्ति इति पाठान्तरम् ।

*Udara'ri rasa.*

Equal quantities of mercury, copper-sulphate, croton seeds, and pippali are to be rubbed together with the ( black-coloured ) kernel of a'rag-badha, and made into pills, six ractis in weight, each. Pulp (i, e, the soft portion clinging to the seeds ) of tamarind, dissolved with water, is to be drunk after taking the medicine. Diet, curd with boiled rice. This medicine is a strong purgative. It cures dropsy, especially of women-folk.

### श्रीवैद्यनाथादेश रसः ।

त्रिकटुकपारदपथ्यासमभागं कानकफलं द्विगुणम् । माषप्रमाणा वटिका कार्य्या स्वरसेनाम्ललोनिकायाः ॥ प्रवलजलोदरगुल्मज्वर-पाण्ड्वामयनाशिनी प्रोक्ता । सतिमिरपटलविद्रधिप्रवलोदावर्त्त-

शूलहरी ॥ क्रिमिकोठकुष्ठकण्डुपिड़काश्च निहन्ति रोगचयम् ॥ सिद्धरसः प्रथितो भुवने श्रीवैद्यनाथपादाज्ञा ॥

*Baidyana'tha'desha rasa.*

Equal quantities of trikatu, incinerated mercury, and haritaki are to be mixed with croton seeds, double in quantity of all the above-named combined, and rubbed with the juice of cha'ngari. Pills are then to be made, six ractis in weight, each. This medicine cures dropsy, gulma, fever, anemia, loss of eye-sight, growth of a white spot inside the pupil of the eye, bidradhi ( a kind of tumour ), uda'barta, colic, worms and leprosy. This medicine was communicated in a dream, to a certain devotee by Lord, Vaidyana'tha.

बीरज रसः ।

रसो गन्धो विषं तालं त्रिकटु त्रिफला तथा । टङ्कणं समभागञ्च जयपालं चतुर्गुणम् ॥ भृङ्गराजरसेनाथ केशराजरसेन वा । मधुना वटिका कार्य्या गुञ्जाद्वयमिता शुभा ॥ बीरजाख्यो रसः ख्यातः शोथोदरविनाशनः । कामलां पाण्डुरोगञ्च आमवातं हलीमकम् । हन्यात् भगन्दरं कुष्ठं प्लीहानं गुल्ममेव च ॥

*Biraja rasa.*

One part, each, of mercury, sulphur, aconite, orpiment, trikatu, and bora'x, and four parts of croton seeds are to be rubbed together with the juice of bhringara'ja or keshara'ja

and honey, and made into pills, two ractis in weight. each. This medicine cures dropsy, udara-roga, jaundice, anemia, rheumatism, fistula, leprosy, spleen, and gulma.

## विनोद-विद्याधर रसः।

रसेन्द्रबलिटङ्कणैः सजयपालवीजैः समै रसः सुमर्दितो भवेत् खलु विनोदविद्याधरः। पयोगुड़युतो हरेत् सकलरेचनीयामयान् ज्वरं च जठरामयान् गुदगदं सशूलं नृणाम्॥ समग्रविरेचनाभावे मुद्गक्काथं पिबेदनु। भेदाधिक्येऽ पिबेत्तक्रं वब्बुराणां त्वचो रसम्॥

### *Binoda vidyadhara rasa.*

Equal quantities of mercury, sulphur, borax, and croton seeds are to be rubbed with water, and made into pills, one racti in weight, each. One such pill, rubbed with a little molasses and cold milk, causes a good purgation and pacifies chronic fever, udara-roga, piles, and colic. Should this medicine fail to cause a satisfactory purgation, soup of mudga should be drunk sometime after taking the pill. In case of an unduly excess of purgation, butter-milk or juice of bark of babbula is to be drunk for stopping the movement of the bowels.

## सुरेचन रसः।

अष्टौ निस्तुषदन्तिवीजमपि चेच्छ्रुण्ठ्यास्त्रयो गन्धकात् द्वौ च द्वौ मरिचस्य टङ्कणरसं चैकैकभागं पृथक्। गुञ्जामात्रमिदं सुरेचनकरं देयं च शीताम्बुना शोथं गुल्मजलोदरं प्रशमयेत् प्लीहामयघ्नं परम्॥

*Surechana rasa.*

Eight parts of croton seeds, three parts of shunthi, two parts of sulphur, two parts of maricha, one part of borax, and one part of mercury are to be rubbed together with water, and made into pills one racti in weight, each. One such pill, rubbed with cold water, causes a very good purgation. This medicine cures dropsy, gulma and enlargement of spleen.

उदरघ्न रसः ।

जीमूतलोहरसगन्धशिलालताम्रव्योषाग्निकुष्ठमुसलीविषटीप्यचूर्णम् । निम्बकनीरलुलितं गुटिकीकृतं तद् भुक्तं निशासु मधुना सकलोदरघ्नम् ॥

*Udaraghna rasa.*

Equal quantities of mica, iron, mercury, sulphur, realgar, orpiment, copper, trikatu, roots of chitraka, kustham, mushali, aconite, and jama'ni are to be rubbed together with lemon juice, and made into pills ( one racti in weight, each ), to be taken at night with honey. This medicine cures all sorts of udara-roga.

मृत्युनिरोध रसः ।

द्विक्षारं त्र्यूषणं पञ्चलवणं शतपुष्पिकाम् । समभागमिदं सर्व्वं पटचूर्णं समाचरेत् ॥ तत्समौ रसगन्धौ च कृत्वा कज्जलिकां शुभम् । सर्व्वमेकत्र संमेल्य मर्द्दयेद्दिवसत्रयम् ॥ अयं मृत्यु-

निरोधाख्यो रस शोघ्रफलप्रदः। कथितो मलयार्य्येण सन्निपातज्वरः परम्॥ सन्निपाते प्रयोक्तव्यो रक्तिकापञ्चमात्रिकः। चित्रकार्द्रकसिन्धूत्थैकटुभिर्व्वा समन्वितः॥ पीततोयं त्रिदोषार्त्तं निर्व्वाते शाययेत तम्। पथ्यं दध्योदनं देयं याचमानाय नान्यथा॥ गुणो न जायते यस्य तस्य देयो रसः पुनः॥ हन्याद्वातगदं तथा कफगदं मन्दानलत्वं ज्वरं। शूलं सर्व्वमथामयान् जठरजां पीड़ां यकृत्पाण्डुताम्॥ शोफं गुल्मरुजं तथा ग्रहणिकां प्लोहामयं विड्ग्रहं। वान्तिं गुल्मक्षतां सकासमभितः श्वासं च हिक्कामपि॥

*Mrityu nirodha rasa.*

One part, each, of the following, finely powdered and sifted :—the two ksha'ras ( i, e, ½ part of javaksha'ra and ½ part of sarjiksha'ra, combined ), trikatu ( i, e, ⅓ part, each, of shunthi, pippali, and maricha, combined ), panchalavanam ( i, e, one fifth part, each. of saindhava. sauvarchala, bira, sa'mbara, and sa'mudra, combined ), and shatapuspi, and one part, each, of mercury and sulphur, (previously reduced to kajjali or black powder by being rubbed together ), are to be rubbed together for three days, and made into pills, five ractis in weight, each. This medicine is especially efficacious in diseases due to an abnormal excess of the three dosas. In sa'nnipa tika fever, this medicine is to be given with honey and any one of the following :—decoction of the roots of chitraka, juice of ginger, rock-salt, powdered trikatu. The patient, after taking the medicine, is to lie down in a room, not disturbed by drafts of air, and should be allowed to drink watar only, when thirsty. Diet. boiled rice with curd, to be given only when the patient asks for food, and not otherwise. The medicine may be repeated at suitable

intervals, if the first dose fails to bring about the desired effect.

This medicine cures diseases due to an excess of va'yu, kapha, slowness of the digesting heat, fever, colic, all sorts of udara-roga, diseases affecttng the liver, anemia, swelling due to anemia gulma, chronic diarrhoæ, enlargement of the spleen, constipation, vomiting due to gulma, cough asthma, and hiccough.

## त्रैलोक्यरञ्जन रसः ।

शुद्धसूतं द्विधा गन्धं ताम्राभ्रं सैन्धवं विषम् । कृष्णजीरं विडङ्गं च गुडूचीसत्त्वचित्रकम् ॥ एला चैव यवक्षारं प्रत्येकं कर्षमात्रकम् । निर्गुण्डिकाद्रावैरग्निवीजपूररसैर्दिनम् ॥ मर्द्दयेच्छोषयेत् सम्यग् रसत्रैलोक्यरञ्जनः । गुञ्जाद्वयं घृतैर्लेह्यं वातोदरकुलान्तकः ॥ पलमेकं चित्रमूलं द्विगोमूत्रैश्चतुर्जलैः । पाच्यं यावद् भवेत् कल्कं घृतं कल्कं च योजयेत् । पलैकं च यवक्षारं क्षिप्त्वा पक्त्वा च तारयेत् । तत्कर्षकं पिवेच्चानु स्निग्धमुष्णं च भोजयेत् ॥

*Trailakya ranjana rasa,*

One part, each, of mercury, copper, mica', rock-salt, aconite, black jeera', biranga, essence of guruchi, roots of chitraka, ela', and java-ksha'ra, and two parts of sulphur are to be mixed together ( by rubbing, first of all, mercury with sulphur and thereby forming a black powder, and then mixing the other articles with it ), and then rubbed for one day with the juices or decoctions of nirgundi, roots of

chitraka, and bijapura, and perfectly dried. Dose, two ractis, a day, to be taken with a few drops of clarified butter. It cures va'todara radically. One tola' of the clarified butter, mentioned below, is to be drunk after taking the medicine, stated above :—

Four tola's of powdered roots of chitraka and eight tol'as of cow's urine are to be boiled with 16 tola's of water and turned semi-solid. It is then to be mixed with 16 tola's of cow's butter, clarified, and boiled by a mild heat. When the liquid is freed from water ( containing clarified butter only ), have it filtered by means of a piece of cloth. The liquid, thus filtered, is to be mixed with four tola's of javaksha ra. Dose, one tola', a day.

### महानल रसः ।

चतुः सूतस्य गन्धोऽष्टौ रजनी त्रिफला शिवा । प्रत्येकं च द्विभागं स्यात् त्र्यूषजीरकदन्तिकाः ॥ प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् । जयन्त्याद्रकपयोभृङ्गवह्निवातारितैलकैः ॥ प्रतेरकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् । महानलरसो नाम निष्कमुष्णजलैः पिबेत् ॥ विरेचनं भवेत्तेन तक्रभक्तं ससैन्धवम् । दिनान्ते भोजयेत् पथ्यं वर्जयेच्छीतलं जलम् ।

### *Maha'nala rasa.*

Four parts of mercury, eight parts of sulphur, two parts each, of haridra', triphala', and haritaki, and eight parts, each, of trikatu, jeera', and roots of danti are to be mixed together, and subjected to bha'vana', for seven times each, in succession, with the following :—

Juice of leaves of jayanti, milk of snuhi. juice of bhringará'ja, decoction of roots of chitraka, and castor oil. Dose, one-fourth of a tola, to be taken with hot water. This medicine is a good purgative. Diet, boiled rice with butter milk mixed with rock-salt, to be taken in the afternoon ( after the completion of purgation ). Drinking of cold water is to be avoided. This medicine cures all sorts of Udara-roga.

### वैश्वानर रसः ।

रसगन्धकताम्राणि शिलाभित्कान्तलौहकम् । त्रिकटुश्चित्रकं कुष्ठं निर्गुण्डी मूसली विषम् ॥ अजमोदा च तत् सर्व्वं समभागेन कल्पयेत् । चूर्णीकृत्य ततः सर्व्वं निम्बक्काथेन भावयेत् ॥ एकविंशत् प्रकारेण भृङ्गराजेन सप्तधा । मधुना गुटिकां शुष्कां रजन्यां तु प्रदापयेत् ॥ वैश्वानराभिधो योगो जलोदरविशोषणः ॥

*Baiswa nara rasa.*

Equal quantities of mercury, sulphur, copper, shila'jatu, ka'nta-lauha, trikatu, roots of chitraka, kustham, nirgundi, musali, aconite, and ajamoda' are to be mixed together, and subjected to bha'vana', for 21 times, with the decoction of nimba, and for 7 times, with the juice of bhringara'ja. Dose, two ractis a day, to be taken at night with a few drops of honey. This medicine cures dropsy.

### उदर मार्त्तण्ड रसः ।

पलोन्मितस्य शुल्वस्य सूक्ष्मपत्राणि कारयेत् । तत्समं गन्धकं दत्त्वा खर्परे सर्व्वं विनिक्षिपेत् ॥ जम्बीररससंयुक्तं दिनं घर्म्मे निधापयेत् । ततः शुल्वे द्रवीभूते रसकञ्च नियोजयेत् ॥ तत्

सिद्धमुदरे योज्यं शोफे नैव भगन्दरे । नाम्ना तूदरमार्त्तण्डरस एव प्रकीर्त्तितः ॥

### *Udara ma'rtanda rasa*

Four tolas of fine copper wire, as thin as possible, and an equal quantity of sulphur are to be immersed in lime juice in a stone mortar, exposed to the sun. When the whole thing will melt and mix together, mix one tola of mercury with it Reduce the compound to ashes by heat by laghu-putam. Dose, two ractis a day, applicable in udara-roga, dropsy and fistula.

### ताम्रभस्म प्रयोगः ।

केवलं भसितं ताम्रं शृङ्गवेररसैः सह ।
द्विगुञ्जं भक्षयेत् प्रातः सर्व्वोदरविनाशनम् ॥

### *Application of copper.*

Incinerated copper, rubbed with honey and ginger-juice, taken in the morning, in doses of two ractis a day, cures all sorts of udara-roga.

### पर्पटी प्रयोगः ।

पर्पटीसंज्ञकानां भैजज्यानां मध्ये यानि यानि उत्तमानि तानि सर्व्वानि सर्व्वेषु उदररोगेषु अतिमात्रं फलदानेरवानुभूयन्ते ।

### *Application of parpati.*

The best of the parpatis, taken with suitable accompani-

ments, are found to be very efficacious in all sorts of udara-rogas.

## उदर रोग पथ्यानि ।

विरेचनं लङ्घनमब्दसम्भवाः कुलत्थमुद्गारुणशालयो यवाः । मृगद्विजा जाङ्गलसंज्ञयान्विताः पेयाः सुरामाक्षिकसीधुमाधवाः ॥ तक्रं रसोनोरुवुतैलमार्द्रकं शालिञ्चशाकं कुलकं कठिल्लकम् । पुनर्नवा शिग्रुफलं हरीतकी ताम्बूलमेला यावशूकमायसम् ॥ अजागवोष्ट्रो महिषीपयोजलं लघूनि तिक्तानि च दीपनान्यपि । वस्त्रेण संवेष्टनमग्निकर्मता विषप्रयोगोऽनुयुतो यथायथम् ॥ समीरणोत्थे घृतपानमादितः साभ्यञ्जनं वाप्यनुवासनं तथा । यथामलं पथ्यगणोऽयमाश्रितः सखा नृणां स्यादुदरामये सति ॥

*Diet and actions beneficial in udara-rogas :—*

Purgation, fasting, kulattha gram of one year old, mudga gram, red sha'li rice, barley, meat of wild beasts and birds. rice boiled with eleven times its weight of water, wine, ( except when taking medicines prepared from mercury and other minerals ), honey, sidhu, madhvi ( see page 372, vol. 111 ), butter-milk, garlics, castor oil, ginger, sha'lincha leaves patola, kerabella, punarnava', shigru ( drum sticks ), haritaki, betel leaves, ela', java-ksha'ra. iron, goat's milk cow's milk camel's milk. buffalo's milk goat's urine, cow's urine, camel's urine, buffalo's urine, light food, bitters, articles of food-stuff increasing the digesting heat, covering the belly with clothes, exposure of the belly to the heat of mild fire ( if considered necessary ), application of aconite.

All these are to be used having regard to the condition

of the patient. In va'todara, at early stages, the following are considered very beneficial :—drinking of clarified butter, rubbing the whole body with oil; and application of douche of oil only.

## उदररोगेऽपथ्यानि।

स्नेहनं धूमपानं जलपानं शिराव्यधः। छर्दिं यानं दिवानिद्रां व्यायामं पिष्टवैकृतम्॥ औदकानूपमांसानि पत्रशाकांस्तिलानपि। उष्णानि च विदाहीनि लवणान्यशनानि च॥ शिम्बीधान्यं विरुद्धान्नं दुष्टनीरं गुरूणि च। महेन्द्रगिरिजातानां सरितां सलिलानि च॥ विष्टम्भीनि विशेषात् तु स्वेदं छिद्रमसुद्भवे। वर्जयेदुदरव्याधौ वैद्यो रक्षन् निजं यशः॥

*Actions and diet prohibited in udara-roga*

Drinking of oil, butter, and other fatty substance ( except clarified butter in the case of va'todara ), smoking, drinking of water ( in excess, of course ), blood shed, vomiting, use of conveyances ( for journey which is to be avoided ), sleeping in day time, physical exercise, taking of pistam ( i.e, food prepared by pestling rice and other cereals, and then roasting, baking, or boiling them ), meat of aquatic animals, meat of animals grazing near water ( such as goat ). pot herbs, sesamum seeds, hot food, bida'hi food ( see page 7, footnote), food prepared with much of salt, all sorts of pulses and beans ( except mudga ), food incongenial by combination, impure water, heavy food, water of rivers issuing out of the Eastern Ghats, articles of food-stuff causing flatulence, and fomentation ( which is especially to be avoided in kshatodara ).

## अथ प्लीहयकृदुदरनिदानम् ।

विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थं मसृक् कफश्च । प्लीहाभिवृद्धिं कुरुतः प्रवृद्धो प्लीहोत्थमेतज्जठरं वदन्ति ॥ तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽति पाण्डुः । सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव । उदावर्त्तरुजानाहैर्मोहतृड् दहनज्वरैः । गौरवारुचिकाठिन्यैर विद्यात् तत्र मलान् क्रमात् ॥

*Enlargement of spleen and liver.*

*Causes and symptoms.*

Pleehodara or enlargement of spleen is due to the blood and phlegm turning impure, on account of eating food-stuff which is classed as bida'hi and increaser of kapha.

Jakrithudara or enlargement of the liver is also due to the same cause, as stated above.

In these two kinds of udara-rogas, an abnormal excess of va'yu causes uda'barta, pain. and a'na'ha, an excess of pittam causes loss of consciousness, thirst, sensation of heat, and fever ; and an excess of kapha gives rise to heaviness of the limbs, aversion to food, and stiff ness of the belly.

## अथ प्लीहयकृच् चिकित्सायां रसप्रयोगः ।

### प्लीहान्तक रसः ।

हतशुल्वञ्च तारञ्च गगनायसमुक्तिका । दरदं पुष्पकं सूतं गन्धकं नवमं तथा ॥ गुग्गुलु स्त्रिकटुरास्ना तथा जैपालवीजकम् । त्रिफला कटुका दन्ती देवदाली तु सैन्धवम् ॥ त्रिवृता

तु यवक्षारो वातारितैलमर्द्दितम् । अष्टोदराणि पाण्डुत्वमानाहं विषमज्वरम् । अजीर्णमामं सकफं क्षयञ्च सर्व्वशूलकम् ॥ कासं श्वासञ्च शोथञ्च सर्व्वमाशु व्यपोहति । प्लीहान्तको रसो नाम्न प्लीहोदरविनाशनः ।

Iatro-medical treatment for enlargement
of spleen and liver.

*Pleehàntaka rasa.*

Equal quantities of copper, silver, mica', iron, pearls, cinnabar, puspa'njana or puspaka'sisa, mercury, sulphur, guggulu, trikatu, ra'sna', croton-seeds, triphala', katuki, roots of danti, devada'li, rock-salt, tribrit, and javaksha'ra are to be rubbed together with castor oil, and made into pills, one racti in weight, each. This medicine cures eight different kinds of udara roga, anemia, a'na'ha, chronic fever, indigestion mucus, consumption due to an excess of phlegm, all sorts of colic, cough, asthma, and swelling due to anemia. It is especially efficacious in enlargement of spleen and liver.

## प्लीहार्णव रसः

हिङ्गुलं गन्धकं टङ्कमभ्रकं विषमेव च । प्रत्येकं पलिकं भागं चूर्णयेदतिचिक्कणम् ॥ पिप्पली मरिचञ्चैव प्रत्येकञ्च पलार्द्धकम् । मर्द्दयित्वा वटीं कुर्य्याद् वल्लमात्रां प्रयत्नतः ॥ सेव्या सेफालिदलजैर्वटी माक्षिकसंयुता । प्लीहानं षट्प्रकारञ्च हन्ति शीघ्रं न संशय ॥ ज्वरं मन्दानलञ्चैव कासं श्वासं वमिं भ्रमिम् । प्लीहार्णव इति ख्यातो गहनानन्दभाषितः ॥

*Pleehàrnava rasa.*

Four tola's, each, of çinnabar, sulphur, bora'x, mica', and aconite are to be rubbed together and mixed with two tola's, each, of pippali and maricha. Pills are then to be made, three ractis in weight, each, to be taken with honey and juice of shepha'lika' leaves. This medicine cures six kinds of spleen, fever, dullness of digesting heat, asthma, cough, vomiting, and giddiness.

प्लीहशार्दूल रसः ।

सूतकं गन्धकं व्योषं समभागं पृथक् पृथक् । एभिः समं ताम्रभस्म योजयेद् वैद्यबुद्धिमान् ॥ मनःशिला वराटञ्च तुत्थं रामठलौहकम् । जयन्ती रोहितश्चैव क्षारटङ्कनसैन्धवम् ॥ विड़ं चित्रं कानकञ्च रसतुल्यं पृथक् पृथक् । भावयेत् त्रिदिनं यावत् त्रिवृच्चित्रकगार्द्रकैः ॥ गुञ्जामात्रां वटीं खादेत् सद्यः प्लीहविनाशिनीम् । मधुपिप्पलीसंयुक्तां द्विगुंजां वा प्रयोजयेत् ॥ प्लीहानमग्रमांसञ्च यकृद्गुल्मं सुदुस्तरम् । आमाशयेषु सर्व्वेषु चोदरे शोथविद्रधौ ॥ अग्निमान्द्ये ज्वरे चैव प्लीह्नि सर्व्वज्वरेषु च । श्रीमद् गहननाथेन भाषितः प्लीहशार्दूलः ॥

*Pleeha-sha'rdula rasa.*

One part, each, of mercury, sulphur, trikatu, realgar, cowri-shell, copper-sulphate, hingu, iron, jayanti, rohitaka, javaksha'ra, bora'x, rock-salt, roots of chitraka, and croton-seeds, and three parts of copper are to be rubbed together, and subjected to bha'vana', for three days, each, in succession, with the juice or decoction of trivrit, roots of chitraka,

pippali, and ginger juice. Pills are then to be made one racti or two ractis in weight, each, to be taken with honey and powdered pippali. This medicine cures enlargement of spleen,very quickly. It also 'cures agrama'nsa ( swelling and stiffness of that part of the peritonium which lies between the spleen and the liver ), enlargement of the liver, gulma, mucus, all sorts of udara-roga, swelling of the body due to anemia, bidradhi ( a kind of tumour ), dull-ness of the digesting heat, and all sorts of fever.

## प्लीहसूदन रसः ।

कर्षैकं तालचूर्णस्य तत्पादांशं सुवर्णकम् । पलार्द्धं मृत-ताम्रञ्च तत्समं शुद्धमभ्रकम् ॥ मृगाजिनस्य भस्मापि कर्षमत्र प्रदापयेत् । लिम्पाकाङ्घ्रित्वचस्तद्वत् सर्व्वमेकत्र कारयेत् ॥ रस-गुञ्जप्रमाणेन वटिकां कारयेत् ततः । मधुना वह्निचूर्णेन खादे-न्नित्यं यथाबलम् ॥ असाध्यमपि प्लीहानं हन्त्यवश्यं न संशयः । यकृतं पाण्डुरोगञ्च गुल्मादिकभगन्दरान् ॥

*Pleeha-sudana rasa.*

One tola' of orpiment, one fourth tola' of gold, two tola's of copper, two tola's of mica', one tola' of deer's skin, incinerated, and one tola' of powdered bark of the root of a lemon fruit tree are to be mixed together, rubbed with water, and made into pills, six ractis in weight each, to be taken with honey and powdered roots of chitraka. This medicine cures enlargement of spleen and liver, however malignant, anemia, gulma, and fistula.

## प्लीहारि रसः ।

पारदं गन्धकं टङ्कं विषं व्योषं फलत्रिकम् । तोलकस्य समोपेतं जैपालञ्च तदर्द्धकम् ॥ किंशुकस्य रसेनैव याममात्रन्तु मर्द्दयेत् । गुञ्जामात्रां वटीं कृत्वा च्छायायां शोषयेत् ततः ॥ वटिकैका प्रदातव्या शृङ्गवेररसेन च । गुदाङ्कुरे गुल्मशूले प्लीह-शोथे कफात्मके ॥ उदावर्त्ते वातशूले श्वासकासज्वरेषु च । रसः प्लीहारिनामायं कोष्ठामयविनाशनः । आमवातगदच्छेदी श्लेष्मा-मयविनाशनः ॥

### *Pleeha'ri rasa.*

One tola', each, of mercury, sulphur, bora'x, aconite, trikatu, triphala', and half a tola' of croton seeds are to be rubbed, for three hours with the juice of the bark of pala'sha tree, and made into pills, one racti in weight. each, to be dried in the shade. These pills are to be taken with a few drops of honey and ginger juice. This medicine cures enlargement of spleen due to kapha, gulma, colic, uda'varta, colic due to va'yu, asthma, cough, fever, rheumatism, all sorts of udara-roga, and all sorts of diseases due to an excess of knpha.

## वासुकिभूषण रसः ।

सूतेन वङ्गं तु समं नियोज्यं तत्तुल्यशुल्वेन च गन्धकेन । विमर्द्दयेदर्करसेन यामं मृदा च संलिप्य पुटं ददीत ॥ वासार-सैस्तं परिभावयेच्च रसो भवेद्वासुकिभूषणोऽयम् । प्लीहस्य गुल्मस्य च शान्तयेऽस्य वल्लञ्च दद्यात् मधुचूर्णयुक्तम् ।

*Ba'suki-bhusana rasa.*

Equal quantities of mercury. sulphur, copper, and tin are to be rubbed together with the juice of leaves of arka, and made into a lump which is to be coated all round with mud, and dried. This is then to be put inside two earthen basins and heated by putam, as usual. The product is then to be subjected to bha'vana' with the juice of ba'saka, and made into pills, three ractis in weight, each, to be taken with honey and powdered rock-salt. This medicine cnres enlargement of spleen and gulma.

## सद्योमृत्युञ्जय रसः ।

शुद्धसूतं समं गन्धं जारिताभ्रं समं तथा । गन्धस्य द्विगुणं लौहं मृतताम्रं चतुर्गुणम् ॥ द्विक्षारं सैन्धवं विड़ं वराटीभस्म शाङ्ककम् । चित्रकं कुनटी तालं रामठं कटुका तथा ॥ रोहितं त्रिवृता चिञ्चा विशाला धवलाङ्कुठः । अपामार्गस्तालखण्डमञ्जिका च निशाद्वयम् ॥ प्रियङ्गिन्द्रयवं पथ्या अजमोदा यमानिका । तुत्थकं शरपुङ्खा च यक्ष्मद्दीरसाञ्जनम् ॥ प्रत्येकं शाणमानेन भावयेदार्द्रकद्रवैः । गुड़ुच्या स्वरसेनापि मधुनः कुड़वार्द्धतः ॥ वटिकां कारयेद्वैद्यो गुञ्जाषट्प्रमितां पुनः । अनुपानं प्रदातव्यं बुद्धा दोषानुसारतः ॥ भक्षयेत् प्रातरुत्थाय सर्व्वरोगकुलान्तकम् । प्लीहानं ज्वरमुग्रञ्च कासञ्च विषमज्वरम् ॥ आमवातं यकृच्छूलं श्वासमर्शः शिरोरुजम् । गुल्मशोथोदरानाहमग्रमांसं यकृत्क्षयम् । सकामलं पाण्डुरोगमुदरञ्च सुदारुणम् । रोगानीकविनाशाय

शरपुङ्खा च इत्यत्र जयपालश्च इतेतत् पाठान्तरम् ।

केशरी करिणो यथा ॥ सद्योमृत्युञ्जयो रसः प्लीहगुल्मविनाशनः । प्राणिनान्तु हितार्थाय शम्भुना परिकीर्त्तितः ॥

*Sadyo-mrit'yunjaya rasa.*

One-fourth tola', each, of mercury, sulphur, and mica'; half a tola' of iron, one tola' of copper; and one-fourth tola' each, of javaksha'ra, sarji-ksha'ra rock-salt, bira-salt, incinerated cowri-shell, incinerated conch-shell, roots of chitraka, realger, orpiment, hingu, katuki, bark of rohitaka, tribrit, incinerated bark of tamarind roots of bisha'la', roots of white ankotha, roots of apa'marga ( reduced to ashes ), incinerated sprout growing at the top of a palm tree, mallika', haridra'. da'ru-haridra', priyangu, indra-java, haritaki, ajamoda', jama'nika', copper-sulphate, sharapunkha', bark of rohitaka, and,rasa'nja'nam are to be mixed together, and subjected to bha'vana' with the juices of ginger and guruchi. The compound is then to be rubbed with eight tola's of honey, and made into pills six ractis in weight, each. Accompaniment to be decided upon, having regard to the condition of the dosas, This medicine cures enlargement of spleen, intense fever, cough, chronic fever, rheumatism, pain in the liver, asthma, piles, head diseases, gulma, swelling due to anemia, a'na'ha, agrama'nsa, waste due to the inactivity of the liver, anemia, jaundice, and udara-rogas.

## वज्रपाणि रसः ।

रसगन्धकलौहाभ्रं कुनटी मृतताम्रकम् । विषमुष्टि वराटञ्च तुल्यं शंखोरसाञ्जनम् ॥ जातिफलञ्च कट्की द्विक्षारं कानकं तथा । व्योषं हिङ्गु सैन्धवञ्च प्रत्येकं सूततुल्यकम् ॥ श्लक्ष्णचूर्णीकृतं सर्व्व-

